श्रीः ।

# यन्त्रराजः ।

महेन्द्रगुरुविरचितः

मलयेन्दुसूरिविरचितटीकासहितः

तथा

दैवज्ञचूडामणिना श्रीविश्रामेण विरचितः

# यन्त्रशिरोमणिः ।


सूर्यपुर(सुरत)स्थ ज्योतिर्विद्

कृष्णशंकर केशवराम रैक इत्येतैः सम्पाद्य संशोधितः ।





प्रथमावृत्तिः

मुम्बय्यां

पाण्डुरङ्ग जावजी इत्येतैः

स्वीये "निर्णयसागरमुद्रणालये" मुद्रयित्वा प्रकाशितः ।

प्रतयः १५००.

शकाब्दाः १८५८, सन १९३६.

मूल्यं १॥ रूप्यकम्.



# प्रस्तावना.

इदानीन्तनाः पाश्चात्यशिक्षणदीक्षितमानसा बहवो जनाः प्रवदन्ति यत् साम्प्रतिकैः पश्चिमाशाधिष्ठितैर्विद्वद्वरिष्ठैः प्रतिदिनमवर्णनीयं परिश्रमं विधाय खगोलसम्बन्धिज्ञानं यथा समासादितम्, तत्प्रकाशनार्थं च ते महता क्लेशेनार्थव्ययेन च नानाविधानि यंत्राणि व्यरचन् विविधैश्च तैर्यंत्रैरनायासेन करामलकवत्सर्वं भास्करादीनां गगनेचराणामश्विनीप्रभृतीनां नक्षत्राणां मेषादीनां राशीनाञ्च यथा सूक्ष्ममार्गेणावलोकनं, सूर्याचन्द्रमसोरुपरागं च विलोकयामस्तादृक्षं यांत्रिकं साधनं पुरा नासीत् तादृशविविधयंत्रनिर्माणसामर्थ्यस्य तु दूरे वार्तेति, तत्र सूर्यसिद्धान्त, शिष्यधीवृद्धिद, सिद्धान्तशिरोमणिप्रभृतिग्रंथाध्ययनकर्तृणां चतुरचेतसां चेतसि क्षणमप्यधितिष्ठति ॥

सूर्यसिद्धान्ते ज्योतिषोपनिषदध्याये ( १३ )

"तुंगबीजसमायुक्तं गोलयंत्रं प्रसाधयेत् ॥
गोप्यमेतत्प्रकाशोक्तं सर्वगम्यं भवेदिह ॥ १७ ॥
तस्माद्गुरूपदेशेन रचयेद् गोलमुत्तमम् ॥
युगे युगे समुच्छिन्ना रचनेयं विवस्वतः ॥ १८ ॥
प्रसादात्कस्यचिद्भूयः प्रादुर्भवति कामतः ॥
कालसंसाधनार्थाय तथा यंत्राणि साधयेत् ॥ १९ ॥
एकाकी योजयेद्बीजं यंत्रे विस्मयकारिणि ॥
शंकुयष्टिधनुश्चक्रैश्छायायंत्रैरनेकधा ॥ २० ॥
गुरूपदेशाद्विज्ञेयं कालज्ञानमतन्द्रितैः ॥
तोययंत्रकपालाद्यैर्मयूरनरवानरैः ॥ २१ ॥
ससूत्ररेणुगर्भैश्च सम्यक्कालं प्रसाधयेत्" इति ॥

श्रीमल्लाचार्यविरचिते शिष्यधीवृद्धिदे यन्त्राध्याये—

"गोलो भगणश्चक्रं धनुर्घटीशंकुशकटकर्तर्यः ॥
पीठकपालशलाका द्वादश यंत्राणि सह यष्ट्या" ५३ इति

भगवता भास्कराचार्येण विरचिते गोलाध्यायान्तर्गतयन्त्राध्याये—

"दिनगतकालावयवा ज्ञातुमशक्या यतो विना यंत्रैः ॥
वक्ष्ये यंत्राणि ततः स्फुटानि सक्षेपतः कतिचित् ॥ १ ॥
गोलो नाडीवलयं यष्टिः शंकुर्घटी चक्रम् ॥
चाप तुर्य फलक धीरेकं पारमार्थिकं यंत्रम्" ॥२॥ इति ॥

सिद्धान्तशेखरे षोडशे यन्त्राध्याये श्रीपति —

"गोलश्चक्र कार्मुकं कर्तरी च
कालज्ञाने यंत्रमन्यत्कपालम् ॥
पीठं शंकुः स्याद् घटी यष्टिसञ्ज्ञं
गंत्रीयन्त्राण्यत्र दिक्सुमितानि" ॥ २ ॥ इति ॥

इत्यादीना प्राचीनग्रथकाराणा वचनपर्यालोचनया स्पष्ट प्रतीयते भारतीया खगोलप्रेक्षकाऽपि नानाविधयन्त्रनिर्माणपरायणा यन्त्रकोविदाश्चेति, न केवल वार्ताका पपरा किन्तु विविधयन्त्रनिर्माणप्रकारप्रदर्शकान् बहून् ग्रन्थाँश्च समगुम्फन्।

सम्प्रतावत्-१ ( नलिकायन्त्राध्याय )

"नत्वा गणाधिपतिपादयुगं प्रसन्नं
श्रीब्रह्मतुल्यकरणोदितमौर्विकाद्यैः ॥
वक्ष्ये स्फुटं हि नलिकाभिधयंत्रराजं
श्रीपद्मनाभपरमेश्वरकौतुकाय ॥"

इत्यष्टादशभि श्लोकै पण्डिताखण्डल श्रीपद्मनाभो नलिकायन्त्राध्यायमरच यत्। अस्य नलिकायन्त्राध्यायस्य रत्नावलीनाम्नी टीका दैवज्ञवर्येण श्रीरामचन्द्रेण प्रणीता। टीकासमाप्तौ तेन कुलग्रामादिकमपि स्वय प्रदर्शयति—

"आसीदुन्नतदुर्गनाम्नि नगरे साक्षाच्छिवाधिष्ठिते
श्रौतस्मार्तविचारसारचतुरः श्रीबोवनाख्यो गुरुः ॥
ज्योतिर्वित्तिलकैः सुवंदितपदः शिष्टैः सुगीतस्तुतिः
साधूनामवधिः शिवार्चनरतस्तल्लब्धविद्यानिधिः ॥ १ ॥

तत्पुत्रौ भवतस्तयोर्दिनकरो ज्येष्ठः कुलोद्योतकृत्
ज्योतिर्वित्कमलावबोधनरविः शौर्येण तिग्मद्युतिः ॥
सौजन्येन हिमद्युतिश्चतुरया वाचा च वाचस्पतिः
गाम्भीर्येण नदीपतिः करुणया श्रीराघवः सत्कविः ॥ २ ॥
तस्यानुजो दैवविदां वरिष्ठः ख्यातोऽभिरामः किल रामचंद्रः ॥
काश्यां गतोऽसौ जनकेन सार्कं चकार मार्गे नलकस्य टीकाम् ३
वृत्तानि रत्नानि सुवर्णयुक्तान्यादाय बद्धा शिशुबोधनार्थम् ॥
रत्नावलिः कण्ठगता च येषां रत्नावलिर्हस्तगतास्तु तेषाम् ॥ ४ ॥
शाकेऽक्षाभ्राक्षचंद्राब्दे १५०५ शीकरीनगरे कृता ॥
शासत्यकबरे राजन्युर्व्यां राज्यं सुधार्मिकम्" ॥ ५ ॥ इति ॥

२ यन्त्रचिन्तामणि सटीक —

"आसीदग्रजराजवन्दितपदः श्रीवामनो विश्रुतो
ज्योतिःशास्त्रमहार्णवामृतकरः सत्सूक्तिरत्नाकरः ॥
तत्सूनुः क्षितिपालमौलिविलसद्रत्नं ग्रहज्ञाग्रणी-
श्चक्रे चक्रधरः कृती सविवृतिं सद्यंत्रचिन्तामणिम्" ॥२६॥

इति ग्रन्थान्तिमश्लोकत प्रतीयते यद्वामनदैवज्ञतनुजेन श्रीचक्रधरदैवज्ञवर्येण सटीकोऽयं यन्त्रचिन्तामणिर्निरमायीति ।

३ प्रतोदयन्त्रम्—

"विष्णवर्कमुख्यत्रिदिवेशमूर्तेः स्मृत्वा गुरोः सच्चरणारविन्दम् ॥
प्रतोदयंत्रं गणकाग्रतुष्ट्यै वक्ष्ये चमत्कारकरं नृपाणाम्" ॥ १ ॥

समाप्तौ च—

"नन्दिग्रामनिवास्यभूद्द्विजवरो दैवज्ञचूडामणिः
नानाशास्त्रकलाकलापचतुरः श्रीकेशवस्तत्सुतः ॥
तत्पादाम्बुजसेवनाप्तनिगमज्ञानो गणेशः कृती
चक्रे यंत्रमिदं चमत्कृतिकरं भूपादिकानां स्फुटम्" ॥१३॥

इत्यनेन ग्रहलाघवकारेण गणकचक्रचूडामणिना श्रीगणेशदैवज्ञेन विरचितं प्रतोदयन्त्रमिति स्फुटीभवति ॥

४ नलिकाबन्धः—

अस्य रचयिता श्रीपूर्णानन्दसरस्वतीति ग्रन्थारम्भश्लोकतः

"पूर्णानन्दसरस्वती निजगुरुं भक्त्या प्रणम्यादरा-
च्छिष्याणां ग्रहलाघवीयनलिकाबन्धक्रमं वच्म्यहम्" ॥

स्पष्टतया प्रतिभातीति,

५ यंत्रकिरणावलिः सटीका—

अस्या निर्माता श्रीनामदेवात्मजो दैवज्ञकुलालंकारः श्रीपद्मनाभः । टीकाऽपि च ग्रंथकर्त्रा विरचितेति तदवलोकनेन स्पष्टं प्रतीयते ॥

६ यंत्रराजः—

ग्रन्थोऽयं तत्रभवता महेन्द्रसूरिणा विरचितः ।

"लोकानां हितकाम्यया प्रकुरुते सद्यंत्रराजागमं
नानाभेदयुतं चमत्कृतिकरं सूरिर्महेन्द्राभिधः" ॥

इति मंगलाचरणश्लोकतः प्रतीयते । ग्रन्थसमाप्तावपि—

"अभूद्भृगुपुरे वरे गणकचक्रचूडामणिः
कृती नृपतिसंस्तुतो मदनसूरिनामा गुरुः ॥
तदीयपदशालिना विरचिते सुयंत्रागमे
महेन्द्रगुरुणोद्धृताजनि विचारणा यंत्रजा" ॥

इत्यनेन स्वगुरुनामनिर्देशं गुरुवर्यस्य निवासस्थानं चादर्शयत् । ग्रन्थकारस्तु शालिवाहनशाके १२९२ यंत्रराजं चकारेति "द्विनंदसूर्यै १२९२ रहिताः शकाब्दाः" श्लो० ४० इति ग्रंथादिनक्षत्रध्रुवकेभ्योऽभीष्टवर्षे नक्षत्रध्रुवकानयनप्रकारतो ज्ञायते सटीकायां "अयं ग्रंथः शाके १२९२ वर्षे निष्पन्नः" इति, अस्य यंत्रराजस्य टीका विद्वद्वर्येण श्रीमलयेन्दुसूरिणा विरचिता ।

"श्रीपीरोजशकेंद्रसर्वगणकैः पृष्टो महेंद्रप्रभु-
र्जातः सूरिवरस्तदीयचरणांभोजैकभृंगद्युता ॥
सूरिश्रीमलयेन्दुना विरचितेऽस्मिन् यंत्रराजागम-
व्याख्याने प्रविचारणादिकथनाध्यायोऽगमत्पंचमः" ॥

इत्यनेन ग्रंथान्तश्लोकेन ग्रन्थकर्तुः श्रीपीरोजराजस्य समानकालिकत्वं तत्सदसि वर्तमानानां संख्यावतां वरिष्ठत्वं स्वस्य च तच्छिष्यत्वं टीकाकृद् द्योतयति ।

७ यंत्रशिरोमणिः—

"भूते यंत्रशिरोमणिं सुविशदं विश्रामसंज्ञः स्फुटम्" इति मंगलाचरणश्लोकतोऽस्य रचयिता श्रीविश्रामनामा पण्डितः। स च कुत्रत्य इति शंकां स्वयमेव ग्रंथान्ते दूरीकरोति—

"श्रीमद्गुर्जरमण्डले क्षितितलालङ्कारभूते पुरं
श्रीजम्बूसरसंज्ञकं द्विजकुलानंदैकदं तत्र वै ॥
श्रीकौण्डिन्यकयाज्ञवंशजकुले ह्यासीदनंतो द्विजः
श्रौतस्मार्तविचारसारचतुरो दैवज्ञचूडामणिः ॥ १ ॥
तत्पुत्रो हि जनार्दनो निजगुणैः ख्यातो धरामण्डले
तज्जः श्रीपुरुषोत्तमो गुणनिधिः स्वाचारवान् तत्सुतः ॥
विश्रामो गणनाथपादनिरतस्त्रिस्कंधपारंगतः
श्रीमद्यंत्रशिरोमणिं सुविशदं चक्रेऽगयंत्रात्मकम् ॥ २ ॥
दृष्ट्वा यंत्रशिरोमणिं सुविशदं सुज्ञा गुणज्ञाः सदा
नानानन्दभरैर्युताः सुगणकास्तृप्यन्तु वान्ये जडाः ॥
नानाक्रोधभरैर्युताः कुमतयः क्रुध्यन्तु येषां भवेद्
दिव्यं ज्ञानमभीप्सितं सुमतयस्ते वै पठन्तु ध्रुवम् ॥ ३ ॥
शाके सप्तत्रिपंचेंदु १५३७ प्रमिते रचितो मया
ग्रंथो यंत्रागमानां हि वृत्तैर्नंदेंदुदस्रकैः २१९" ॥ ४ ॥

इत्यनेनायं ग्रंथो ग्रंथकृता शालिवाहनशाके १५३७ विरचित इति प्रतीयते।

अथ प्रसंगवशात्पाश्चात्यदेशीयानां विदुषामप्येतस्मिन् विषये कीदृक्षः प्रयासः सोऽपि निरीक्ष्यते। तत्र तावत्—

१ तुर्कस्थाने टाईग्रीस-युफ्रेटीस्-नद्योर्मुखाग्रे बाबीलोनीया नामको जनपदो वर्तते, तत्र युफ्रेटीस् नद्यास्तीरे "बाबोलीन" इति नाम्ना प्रसिद्धे नगरे कस्यचिन्मन्दिरस्य शिखराग्रे प्रायोऽष्टादशशत १८०० फुटपरिमितमुच्चं तत्रैका वेधशालाऽऽस्यासीत्। तत्रत्यराजगुरवोऽपि खाल्डीयना ज्योतिःशास्त्रे ग्रहवेधादिके ख्यातिमवीणा आसन्निति श्रूयते ॥

---

१ यंत्रशिरोमणिकृता पण्डितवर्येण श्रीविश्रामेण विरचिता "जातकपद्धतिः" संपलभ्यते, तस्याः षडध्यायाः सन्ति। सा च "शाके नंदद्विपंचेंदु १५२९ प्रमिते च नभस्यके। वृत्तैः सप्ताब्धि ४७ तुल्यैश्च कृता जातकपद्धति"रित्यादि समाप्तिश्लोकेभ्यो ज्ञायते।

२ इजिप्टप्रदेशेऽपि बहूनि मन्दिराणि वर्तन्ते तेष्वेकं त्रिंशदक्षवृत्ते निर्मितं तस्योत्तरदिग्विभागे ध्रुवतारकवेधार्थं विरचितं छिद्रं वर्तते, तस्मात्र तत्रत्या ध्रुववेधं कुर्वन्तो ज्योतिर्विद्यायामतिकुशला इत्याद्या बहवो लेखा उपलभ्यन्ते ॥

३ चीनदेशीया बहवो ज्योतिःशास्त्रसम्बन्धिनो लेखाः ।—चीनदेशीयानां च वेधयंत्राणि, वेधपद्धतिश्च प्रशस्या युरोपदेशीयानां वेधपद्धत्या न न्यूना च, चीनदेशीयानां विदुषां सन्निधौ याम्योत्तरलंघनयंत्रं, जलयंत्रं च वर्तते स्म, तेषां मते चतुर्विंशतिर्नक्षत्राणां, तत्र प्रथमं कृत्तिकानक्षत्रं, प्रतिनक्षत्रमेकैका तारा । तदनन्तरं कैश्चित्तद्देशीयैस्तारकचतुष्टयं संयोज्याष्टाविंशतिसंख्याकानि तारकाणि निश्चितानि । एतत्सर्वं खीस्ताब्दात्पूर्वमेकादशशतमिते समये लोके प्रसिद्धिमागतम् । तदनंतरं खीस्ताब्दात्पूर्वमष्टमे शतके षट्त्रिंशत्संख्यापरिमितानि ग्रहणानि विलिखितानि तानि च प्रायो यथायोग्यानि । ततश्च खीस्ताब्दस्य १६४ परिमितं समयमारभ्य चीनदेशीयैः कृतं किमपि नोपलभ्यते ।

४ ग्रीकदेशे पीथागोरास इति नामकः सुप्रसिद्धो ज्योतिर्विदभवत् । तस्याभिप्रायेण भगवान् सूर्यः पृथिव्याः परितो भ्रमति, सूर्यमण्डलं जगतो मध्यविन्दुः एवं खीस्ताब्दात्पूर्वं तृतीये शतके वर्तमानानां ग्रीककोविदानां मंतव्यमिति ।

५ पंचाशदधिकशतमिते १५० खैस्ताब्दे श्रीमान् टालमी महोदयोऽभवत् । तेन निर्मितो " संटिक्स " ग्रंथोऽद्याप्युपलभ्यते । अस्यैव नामान्तरं " आलमाज्येष्टः " वर्तते । पाश्चात्यैरारबदेशीयैश्च " आलमाज्येष्टः " ईश्वरप्रणीत इव पूज्यते, टालमीमहोदयमतेन धरणिर्वर्तुला, निराधारा, गतिशून्या, जगतो मध्यविन्दुरूपा, विराजते, परितश्च तस्या वर्तुलाकारेण सर्वाणि ज्योतींषि भ्रमन्ति । रविचन्द्रादयस्तु पश्चिमतः पूर्वं गच्छंति, तत्रापि पृथिव्याः स्वल्पान्तरे चंद्रस्ततो बुधशुक्रसूर्यभौमगुरुशनयोऽनुक्रमेण वर्तन्ते । तेषां गतिरपि न समानेत्यादि ॥

६ पंचाशदधिकशतमिते १५० खैस्ताब्दे हिपार्क्स इति सुप्रसिद्धयशोराशिः खगोलविद्यानिपुणो युरोपदेशमलङ्करोति स्म, ( प्रायःसमकालीनौ टालमी–हिपार्कसंमहोदयौ ) ताभ्यामयनसंशोधनं–चन्द्रसूर्यग्रहणज्ञानप्रकाराः, ग्रहणयोश्च कारणं, पृथ्वीचन्द्रमसोरन्तरं, ग्रहाणामंतरम्– इत्यादि सूक्ष्मरीत्या संशोध्य निश्चितम् ।

७ मुसलीमास्तु प्रायः खैस्ताब्दस्य सप्तमे शतके एलेक्झान्ड्रीयाख्यं सुप्रसिद्धं पुस्तकालयं विना कारणमदहन् । तत्स्थाने च तदनन्तरं बगदाद नगरे प्रतिष्ठाप्याष्टमशतके भारतीयानां ज्योतिषशास्त्रीयाणां ग्रन्थानां गणितविभागस्य चानुवादमारवीयभाषायां मोहम्मदीया विद्वांसोऽकुर्वन् । श्रीबगदादनगरस्थस्य श्रीखलीफस्य राजसभायां त्रिसप्तत्यधिकसप्तशतपरिमिते ७७३ खैस्ताब्देऽज्ञातनामधेयः कश्चिद्भारतीयो ज्योतिषिको विद्वद्वरिष्टपदवीं विभूषयन् विराजति स्म, मुस्लीमपण्डिता

अपि ग्रहवेधादिष्वतिनैपुण्यं पदमलङ्कुर्यते स्म। तेषां वेधयंत्राणि चतुरचेतसां चेतःसु चमत्कृतिं जनयन्ति स्म, ज्योतिःशास्त्रं च तैरतिकौशल्येनाचिरेण समैधि। तदनन्तरं तैमुरलंगस्य नप्ता उलुगबेग इति नाम्ना प्रख्यातोऽभवत्। तदभिधानं च बहुषु संस्कृतपुस्तकेषूपलभ्यते। श्रीमानुलुगबेगस्तु समरकन्दे महतीं वेधशालां संस्थाप्योत्कृष्टप्रकारेण ग्रहवेधान् चकारेत्यादि सर्वं तत्रभवता गोब्राह्मणप्रतिपालकेन विविधविद्याविद्योतितमानसेन राजराजेन श्रीजयसिंहेन सूर्यादीनां वेधार्थं सर्वोत्कृष्टां वेधशालां संस्थाप्य स्वकीये "सिद्धान्तसम्राट्" नाम्नि पुस्तके वर्णितं समुपलभ्यते। युरोपखण्डेऽपि ज्योतिःशास्त्रप्रचारस्त्वारबीयैर्विद्वद्भिः समकारि। खैस्ताब्दस्य नवमे दशमे च शतके फ्रान्सदेशीयैरपि विद्याविलासिभिः सज्जनैः स्पेनदेशीयेभ्यो मोहमदीयेभ्यो ज्योतिषशास्त्रीयं ज्ञानं गुरुणा प्रयत्नेन समपादि, खैस्ताब्दस्य त्रयोदशे शतके "अलमाजेस्टस्य" आरबीयभाषांतरतो लेटीनभाषायामनुवादोऽपि विरचितः। तदनंतरं "कास्टील" स्य नृपवरः श्रीमान् "ओल्फोस" महानुभावो नवीनं ज्योतिषग्रंथमकारयत्। तेन प्रतिदिनं ज्योतिषशास्त्राध्ययनं तत्र सर्वत्र समवर्धत। पंचदशे शतके जर्मनप्रदेशेऽपि ज्योतिषशास्त्रे कृतभूरिपरिश्रमाः संशयापन्नो ग्रहवेधप्रभृतिकार्यकलापकुशलाः केचन समभवन्।

८ त्रिसहस्राधिकचतुर्दशशतमिते १४७३ खैस्ताब्दे प्रशियाप्रदेशे सूर्यादीनां वास्तविकस्य तत्त्वज्ञानस्य कारयिता श्रीमान् "कोपर्नीकस" इति नामकः समजनि। शनैः शनैः स च गगनेचराणां स्थितिं, वेधं, गणितं च कृत्वा सत्यासत्यं मनसि निश्चित्य त्रिचत्वारिंशदधिकपंचदशशते १५४३ खैस्ताब्दे स्वकीयं ग्रंथं प्रसिद्धिं समनयत्। तस्याभिप्रायेणान्तरिक्षगानां ज्योतिषां दैनंदिना गतिः पृथिव्या अक्षभ्रमणेन भासते। पृथ्वी चैको ग्रहस्तेन साकमन्येऽपि ग्रहाः (बुध, शुक्र, पृथ्वी, भौम, गुरु, शनयः) अनुक्रमेण सूर्यस्य परितो भ्रमन्ति। भगवान्भास्करस्तु जगतो मध्यबिन्दुरित्यादि।

९ अथ विख्यातकीर्तिः कश्चित् "टायकोब्राहे" इत्यभिधानो ज्योतिषशास्त्रविशारदोऽभवत्। षट्सप्तत्यधिकपंचदशे खैस्ताब्दे श्रीमान् डेन्मार्क भूपतिरतिमनोज्ञामेकां वेधशालां स्थापयामास। स च टायकोब्राहे नामकस्तत्र विंशतिवर्षपर्यन्तमाधिपत्यमंगीकृत्य ग्रहवेधादिषु कुशलत्वाद्बहून्युपयोगिपुस्तकानि विलिख्य प्राचीनपुस्तकेषु वृद्धिं चकार। श्रीयुतकोपर्नीकसमहोदयविरुद्धा चास्य मान्यतेति॥

१०-११ ततश्च केप्लरनामा कश्चन विद्वान् संबभूव। स च प्रायः श्रीटायकोब्राहे महोदयमान्यतानुसारी। तदनंतरं ह्युजेंस नाम्ना विख्यातः कश्चन संशोधकः प्रादुर्बभूव।

१२ · अथ चाष्टाशीत्यधिकषोडशशतमिते १६८० खैस्ताब्दे परमसंशोधकबुद्धिः न्यूटन इति नाम्ना विख्यातः स्वसिद्धान्तविभूषितं " प्रीन्सीपीया " इति नामकं पुस्तकं व्यलिखत्। अन्येऽपि कतिपये विद्वांसः स्वस्वप्रज्ञानुसारतः संशोधनं कृत्वा न्यूटनकृतामेव पद्धतिं मुक्तकण्ठेन प्राशंसन्। तस्मिन्नवसरे युरेन्स (प्रजापति) गतिर्निश्चिता परंच सा सान्तरा समदृश्यत। तेन चान्तरेण 'युरेन्स' समाकर्षकः कश्चिद् ग्रहोऽमुकान्तरेऽमुकस्थानेऽमुकदिने दृष्टिपथमागमिष्यतीति प्रथमतो निर्णीय तदनुसारेण षट्चत्वारिंशदधिकाष्टादश १८४६ परिमिते खैस्ताब्दे दूरवीक्षण ( दुर्बीन ) यंत्रद्वारा नेप्‌च्यून ( वरुण ) नामको ग्रहः समलभ्यत ॥

१३ खैस्ताब्दस्य षोडशे शतके होलाण्डप्रदेशे " गेलीलीयो " इति नाम्ना विख्यातः कश्चित् खगोलविद् दूरवीक्षण 'दुर्बीन' यंत्रद्वारा बृहस्पतेरुपग्रहान् प्रालोकितवान्। वक्रकार-परावर्तन-इति नाम्ना दूरवीक्षणयंत्रस्य द्वैविध्यम्। अद्यावधि वक्राकारवीक्षणयंत्रद्वारैवानेकविधं नवीनं संशोधनं विदधाना बहवो विद्वांसोऽजायन्त। महदेकं सर्वोत्कृष्टं वक्राकारनामकं दूरवीक्षणयन्त्रं ( दुर्बीन ) अमेरिकाप्रदेशे केलिफोर्नीयाप्रान्ते माउन्टहेमील्टन नाम्नो महोदयस्य वेधशालायां वर्तते। तस्य व्यासस्तु प्रायो हस्तद्वयपरिमितोऽस्ति। अपरं परावर्तनामकं दूरवीक्षणयंत्रं ' दुर्बीन ' आयर्लेण्डप्रदेशे लोर्डरोस्न्स नाम्नो विदुषो वर्तते। तस्य व्यासश्च चतुर्हस्तपरिमितोऽस्ति। अस्मिन्नेव शतके वर्णलेखनामकमद्वितीयं द्वितीयं यंत्रं केनचिन्महोदयेन निष्पादितं श्रूयते। इदं यंत्रं दाक्षिण्यदेशे पुण्यपत्तने सायन्सकालेजेऽष्टाशीत्यधिकाष्टादशशतमिते खैस्ताब्दे प्रतिष्ठापितं दृश्यते। तन्मूल्यं तु पंचदशसहस्ररूप्यकमितं वर्तते। तस्य व्यासोऽपि द्वाविंशत्यंगुलपरिमितस्तद्द्वारा यः कोऽपि पदार्थो निजस्वरूपतो द्वादशशतगुणो विलोक्यते ॥

एवमिदानीमप्यनेके चन्द्रसूर्यग्रहण, उपग्रह, युरेन्स, ( प्रजापति ) नेप्‌च्यून ( वरुण ) हर्शल, उल्का, ( अशनिनिपात ) धूमकेतु, तारकादिविषयेषु पाश्चात्यशिक्षणविभूषितमानसाः पाश्चात्यदेशीया मनीषिणो लोकोपकारार्थं विविधं ज्ञानं सम्पाद्य बहून् ग्रंथान् नूतनं संशोधनं च कुर्वन्तः समीक्ष्यंते। परंचास्माकं भारतीयानां दैवविदां दुर्दैववशात्तादृग्विधविविधसाधनसम्पत्तिप्रभृतेरभावात्किंचिदपि कर्तुमशक्यत्वात्कस्य सहृदयस्य मनीषिणो हृदयं न भेभिद्यते ॥

अथ प्रकृतमनुसरामि। पूर्वप्रदर्शितेषु नलिकाध्यायप्रभृतिषु ग्रंथेषु सटीको यंत्रराजो यंत्रराज एवेति निश्चित्य मत्संगृहीतपुस्तकेषु च यंत्रराजपुस्तकं सूर्यपुरं विभूषयता दैवज्ञवर्याग्रगण्येन श्रीमता विश्वनाथात्मजेन राघवजिता नवत्यधिकपंचदशशते शालिवाहनशाके स्वहस्तेन लिखितं तदुपयोगि चैकनवत्यधिकपंचदशशत १५९१ परिमिते शाककाले यंत्रराजस्य तत्त्वज्ञानसम्पादनार्थं पैत्तलनिर्मितं यंत्रं महता परि-

ध्रमेण संरक्षितं निरीक्ष्य प्रसंगवशात्सूर्यपुरे मिलितायां पंचम्यां साहित्यपरिषदि प्राचीनग्रंथप्रदर्शनविभागे सपुस्तकं यंत्रं समुपन्यस्तं देशान्तरतः समागतानां नानाविधविद्यापारावारपारीणानां विदुषां प्रमोदाय । तदवसरे तदवलोक्यानेकैर्विद्वद्भिः प्रकाण्डैस्तत्प्रकाशार्थं चाहमत्यंतं प्रोत्साहितः । परञ्च तत्कार्यं धनाधीनमिति संचिन्त्य यथावकाशं केषांचिच्छ्रेष्ठिवर्याणां सदनं गत्वा सयंत्रं यंत्रराजपुस्तकं समदर्शयम् । अतिप्राचीनं सुरक्षितमिदं यदि प्राकट्यं नीयेत, तर्हि महानुपकारोऽद्यावधि संरक्षकस्य रचयितुश्च सफलो भविष्यति परिश्रम इति श्रेष्ठिवर्यैः प्रत्युत्तरे प्रदत्ते, भवादृशां विद्याविलासिनां साहाय्यमन्तरा न शक्यते ईदृग्विधं कार्यं विधातुमिति मद्वचनश्रुतिमात्रेण निष्प्रभाणि मुखारविन्दानि विलोक्य किमपि प्रत्युत्तरमप्रदत्तो तेषां सदनतो निःसरन् ॥

स्मारं स्मारं मलिनविषयान्मानसं मेऽवसन्नं
चारं चारं प्रतिखलगृहं जातखेदौ च पादौ ॥
कारं कारं कुजनविनुतिं क्लेशिता हन्त ! जिह्वा
वारं वारं वरजलनिधे ! किन्तु विज्ञापयेयम् ॥

इति श्रीलक्ष्मीसहस्रस्थनिर्वेदस्तबकीयं वाक्यं विचिन्तयन् पुराऽप्यस्य मुद्रणार्थं द्वित्रिवारमसिद्धमनोरथोऽपि मोहमय्यां प्रसंगवशादगच्छम् । तत्रैकदा निर्णयसागरयंत्रालयाधिपतये प्राचीनार्वाचीनपुस्तकराशितो लोकोपकाराणि पुस्तकानि सहर्षमंकयित्रे विविधविद्याविद्योतितमानसाय श्रेष्ठिवर्यं रा. रा. पाण्डुरङ्ग जावजी महोदयाय सयंत्रं यंत्रराजं यंत्रशिरोमणिं ( यंत्रशिरोमणौ चापयंत्रमणौ, श्रीयंत्रराजोक्तवदेव चिंत्यं, श्रीयंत्रराजेन समं, तुरियंत्रमणौ श्रीयंत्रराजोक्तवदेव शेषं इत्यादिना यंत्रराजेन सहास्य सम्बन्धः प्रतीयतेऽतोऽस्य यंत्रराजेन सह मुद्रणं भवेत्तर्हि महानुपकारो भविष्यतीति विचार्य ) च मुद्रणार्थं प्रायच्छम् । तदवलोक्यातिप्रफुल्लमानसः सोऽब्रवीत् । यदस्माकं पण्डितवर्याणां श्रीमतां पणशीकरोपाह्ववासुदेवशास्त्रिणामनुज्ञामृतेऽन्यत् नवीनपुस्तकमुद्रापणादिकं किंचिदपि कार्यं न भवत्यतस्तदाज्ञाऽस्य मुद्रणे प्रथमतः संपाद्यताम् । तदर्थं च तत्प्रेषितेन भृत्येन सह महानुभावानां श्रीमतां वासुदेवशास्त्रिणां गृहे गत्वा तत्सन्निधौ सर्वं प्रदर्शितं, तद्दृष्ट्वा सहर्षमेतत्सयंत्रं पुस्तकद्वयं दिनत्रयं समीक्ष्य मुद्रणपथमर्हतीति निश्चित्य रा. रा. पाण्डुरङ्ग जावजी महोदयसमीपं मया सह पण्डितारवण्डलाः पणशीकरोपाह्वा वासुदेवशास्त्रिणः समागत्यावश्यमिदं पुस्तकद्वयं मुद्रणार्हमिति प्रोचुस्तदा तदुक्तिं निशम्य मुद्रणकार्यं सानन्दं च निर्णयसागरयंत्राधिपतिनोररीकृतम् । (ग्रंथादौ च पैत्तलनिर्मितयंत्रराजीययंत्रस्यापि प्रतिकृतयः सौकर्यार्थं निवेशिताः)

अयं च मुद्रणसमये मदीयं पुस्तकं शाके १५९० लिखितं प्रायः शुद्धम्, द्वितीयं च वैक्रमाब्दे १७३१ लिखितं केवलं टीकामात्रम्, तृतीयं च श्रीजिनआनन्दपुस्तकालयस्थं सटीकं कुत्रचित्रुटिं. १३ त्रुटितं वैक्रमाब्दे १९५७ लिखितम्.

यंत्रशिरोमणिपुस्तकं चैकमेव वर्षे १५४१ लिखितं इत्येवं पुस्तकत्रयमेकीकृत्य यथामति संशोधनं कुर्वतो मम " गच्छतः स्खलनं क्वापि " इतिन्यायमनुसृत्य मनसश्चंचलत्वाद्यत्राशुद्धिर्दृष्टिपथमागच्छेत्तर्हि क्षीरनीरन्यायेन दोषगणमपहाय गुणलवमेव ग्राह्यीकृत्य सहृदयैर्महानुभावैरशुद्धिपरिमार्जनायावश्यं प्रबोधनीयोऽयं विदुषामनुचर इति ॥

विक्रम संवत् १९९२ श्रीकृष्णजयन्ती } ज्योतिषी **कृष्णशंकर केशवराम रैक्वः.**



# विषयानुक्रमणिका ।



# अथ यन्त्रशिरोमणेर्विषयानुक्रमणिका ।

यंत्र नं. २



यंत्र नं. १३



यंत्र नं. १४





महेन्द्रसूरिविरचितः—सटीकः

# यंत्रराजः ।

॥ श्रीगणेशाय नमः ॥ श्रीसूर्याय नमः ॥

प्रणम्य सर्वज्ञपदारविंदं, सूरेर्महेंद्रस्य पदांबुजं च ॥
तनोति तद्गुंफितयंत्रराज-ग्रंथस्य टीकां मलयेंदुसूरिः ॥ १ ॥

अथ प्रथमतः प्रतिचिकीर्षितस्य सकलगणितसारभूतस्य यंत्रराजग्रंथस्य नितरामंतरायनिरोपणाय शिष्टाचारपरिपालनाय शिष्यप्रशिष्यपरंपरासुप्रचयगमनाय च भक्तजनमनःसंकल्पकल्पद्रुमायमाणस्वाभीष्टदेवतागुरुनमस्कारपूर्वं प्रयोजनसहितं ग्रंथाभिधेयमभिधत्ते ग्रंथकारः—

श्रीसर्वज्ञपदांबुजं हृदि परामृश्य प्रभावप्रदं
श्रीमंतं मदनाख्यसूरिसुगुरुं कल्याणकल्पद्रुमम् ॥
लोकानां हितकाम्यया प्रकुरुते सद्यंत्रराजागमं
नानाभेदयुतं चमत्कृतिकरं सूरिर्महेंद्राभिधः ॥ १ ॥

स्पष्टार्थमेतत् । अत्र सर्वज्ञपदारविंदप्रणमनं युक्तमेवेति तेनैव सर्वशास्त्रेषु सर्वज्ञतायाः संभवात् ॥ १ ॥

अथ ग्रंथकृदेतद्ग्रंथकरणे कारणमाह—

अपारे संसारे कतिकति बभूवुर्न चतुराः
परं तैर्दुर्बोधं गणितमरचि प्रौढमतिभिः ॥
ततः स्वल्पं सारं विशदमिदमत्यंतसुगमं
वितन्वेऽहं शास्त्रं सुहृदयहृदानंदकृतये ॥ २ ॥

ग्रंथास्तथा बहुविधा यवनैः स्ववाण्या
यंत्रागमा निजनिजप्रतिभाविशेषात् ॥
तान्वारिधीनिव विलोक्य मया सुधावत्
तत्सारभूतमखिलं प्रणिगद्यतेऽत्र ॥ ३ ॥

स्पष्टौ श्लोकौ ॥ ३ ॥

अथ सूत्रकृदेव यंत्रराजमहिमानमाचष्टे—

यथाभटः प्रौढरणोत्कटोऽपि शस्त्रैर्विमुक्तः परिभूतिमेति ॥
तद्वन्महाज्योतिषनिस्तुषोऽपि यंत्रेण हीनो गणकस्तथैव ॥ ४ ॥

इदमपि स्पष्टम् ॥ ४ ॥

अथ क्रमोत्क्रमज्यानयनम्—

लवादधस्तात्कलिकादिकं स्यादतीतभोग्यांतरखंडनिघ्नम् ॥
षष्ट्या ६० हृतं लब्धफलेन युक्तं क्रमोत्क्रमात्स्याद्भुजकोटिमौर्वी ५

अस्य व्याख्या ॥ भुजज्याकोटिज्यानयने भुजभागानां कोटिभागानां चाधस्ताद्यदि कलिकादिकं भवति तदा तदतीतभोग्यांतरखंडकेन गुणितं षष्ट्यापहृतं लब्धफले क्षिप्तं प्रत्येकं क्रमे उत्क्रमे च भुजमौर्वी कोटिमौर्वी च स्याताम् । ज्याखंडानि अधस्तादंतराणि ॥

| धनुरंशाः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |
|---|---|---|---|---|---|---|---|---|---|
| क्रमज्या | ६२<br>५० | १२५<br>३८ | १८८<br>२५ | २५१<br>७ | ३१३<br>४५ | ३७६<br>१८ | ४३८<br>४४ | ५०१<br>१ | ५६३<br>१० |
| जीवांतरं | ६२<br>४८ | ६२<br>४७ | ६२<br>४२ | ६२<br>३८ | ६२<br>३३ | ६२<br>२६ | ६२<br>१७ | ६२<br>९ | ६१<br>५८ |

| धनुरंशाः | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ |
|---|---|---|---|---|---|---|---|---|---|
| क्रमज्या | ६२५<br>८ | ६८६<br>५५ | ७४८<br>२९ | ८०९<br>४९ | ८७०<br>५५ | ९३१<br>४५ | ९९२<br>१८ | १०५२<br>३२ | १११२<br>२८ |
| जीवांतरं | ६१<br>४७ | ६१<br>३४ | ६१<br>२० | ६१<br>६ | ६०<br>५० | ६०<br>३३ | ६०<br>१४ | ५९<br>५६ | ५९<br>३५ |

| धनुरंशाः | १९ | २० | २१ | २२ | २३ | २४ | २५ | २६ | २७ |
|---|---|---|---|---|---|---|---|---|---|
| क्रमज्या | ११७२<br>३ | १२३१<br>१६ | १२९०<br>८ | १३४८<br>३६ | १४०६<br>३९ | १४६४<br>१५ | १५२१<br>२६ | १५७८<br>८ | १६६४<br>२२ |
| जीवांतरं | ५९<br>१३ | ५९<br>५२ | ५८<br>२८ | ५८<br>३ | ५७<br>३६ | ५७<br>११ | ५६<br>४२ | ५६<br>१४ | ५५<br>४४ |

| धनुरंशाः | २८ | २९ | ३० | ३१ | ३२ | ३३ | ३४ | ३५ | ३६ |
|---|---|---|---|---|---|---|---|---|---|
| क्रमज्या | १६९०<br>६ | १७४५<br>१९ | १८००<br>० | १८५४<br>८ | १९०७<br>४३ | १९६०<br>४२ | २०१३<br>६ | २०६४<br>५२ | २११६<br>१ |
| जीवांतरं | ५५<br>१३ | ५४<br>४१ | ५४<br>८ | ५३<br>३५ | ५२<br>५९ | ५२<br>२४ | ५१<br>४६ | ५१<br>९ | ५०<br>३१ |

| धनुरंशाः | ३७ | ३८ | ३९ | ४० | ४१ | ४२ | ४३ | ४४ | ४५ |
|---|---|---|---|---|---|---|---|---|---|
| क्रमज्या | २१६६<br>३२ | २२१६<br>२३ | २२६५<br>१३ | २३१४<br>२ | २३६१<br>४९ | २४०८<br>५२ | २४५५<br>११ | २५००<br>४६ | २५४५<br>३५ |
| जीवांतरं | ४९<br>५१ | ४९<br>१० | ४८<br>२९ | ४७<br>४७ | ४७<br>३ | ४६<br>१९ | ४५<br>३५ | ४४<br>४९ | ४४<br>२ |

| धनुरंशाः | ४६ | ४७ | ४८ | ४९ | ५० | ५१ | ५२ | ५३ | ५४ |
|---|---|---|---|---|---|---|---|---|---|
| क्रमज्या | २५८९<br>३७ | २६३२<br>५२ | २६७५<br>२९ | २७१६<br>५७ | २७५७<br>४५ | २७९७<br>४३ | २८३६<br>५० | २८७५<br>५ | २९१२<br>२७ |
| जीवांतरं | ४३<br>१५ | ४२<br>२० | ४१<br>३८ | ४०<br>४८ | ३९<br>५८ | ३९<br>० | ३८<br>१५ | ३७<br>२२ | ३६<br>२९ |

| धनुरंशाः | ५५ | ५६ | ५७ | ५८ | ५९ | ६० | ६१ | ६२ | ६३ |
|---|---|---|---|---|---|---|---|---|---|
| क्रमज्या | २९४८<br>५६ | २९८४<br>३१ | ३०१९<br>१३ | ३०५२<br>५८ | ३०८५<br>४८ | ३११७<br>४१ | ३१४८<br>३८ | ३१७८<br>३७ | ३२०७<br>३० |
| जीवांतरं | ३५<br>३६ | ३४<br>४१ | ३३<br>४५ | ३२<br>५० | ३१<br>५३ | ३०<br>५७ | २९<br>५९ | २९<br>० | २८<br>१ |

| धनुरंशाः | ६४ | ६५ | ६६ | ६७ | ६८ | ६९ | ७० | ७१ | ७२ |
|---|---|---|---|---|---|---|---|---|---|
| क्रमज्या | ३२३५<br>४० | ३२६२<br>४२ | ३२८८<br>४६ | ३३१३<br>४९ | ३३३७<br>५२ | ३३६०<br>५३ | ३३८२<br>५४ | ३४०३<br>५२ | ३४२३<br>४८ |
| जीवांतरं | २७<br>२ | २६<br>४ | २५<br>३ | २४<br>३ | २३<br>१ | २२<br>१ | २०<br>५८ | १९<br>५६ | १८<br>५४ |

| धनुरंशाः | ७३ | ७४ | ७५ | ७६ | ७७ | ७८ | ७९ | ८० | ८१ |
|---|---|---|---|---|---|---|---|---|---|
| क्रमज्या | ३४४२<br>४२ | ३४६०<br>३३ | ३४७७<br>२० | ३४९३<br>४ | ३५०७<br>४४ | ३५२१<br>२० | ३५३३<br>५१ | ३५४५<br>१९ | ३५५५<br>४१ |
| जीवांतरं | १७<br>५१ | १६<br>४७ | १५<br>४४ | १४<br>४० | १३<br>३६ | १२<br>३१ | ११<br>२८ | १०<br>२२ | ९<br>१७ |

| धनुरंशाः | ८२ | ८३ | ८४ | ८५ | ८६ | ८७ | ८८ | ८९ | ९० |
|---|---|---|---|---|---|---|---|---|---|
| क्रमज्या | ३५६४<br>५८ | ३५७३<br>१० | ३५८०<br>१७ | ३५८६<br>१९ | ३५९१<br>१४ | ३५९५<br>४ | ३५९७<br>४८ | ३५९९<br>२७ | ३६००<br>० |
| जीवांतरं | ८<br>१२ | ७<br>७ | ६<br>१ | ४<br>५६ | ३<br>५० | २<br>४४ | १<br>३९ | ०<br>३३ | ०<br>० |

| धनुरंशाः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |
|---|---|---|---|---|---|---|---|---|---|
| उत्क्रम-ज्या | ०<br>३३ | २<br>१२ | ४<br>५६ | ८<br>४६ | १३<br>४२ | १९<br>४३ | २६<br>५० | ३५<br>२ | ४४<br>१९ |
| अंतर-खोटकाः | १<br>३९ | २<br>४४ | ३<br>५० | ४<br>५६ | ६<br>१ | ७<br>७ | ८<br>१२ | ९<br>१७ | १०<br>२२ |

| धनुरंशाः | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ |
|---|---|---|---|---|---|---|---|---|---|
| उत्क्रम-ज्या | ५४<br>४२ | ६६<br>९ | ७८<br>४० | ९२<br>१७ | १०६<br>५७ | १२२<br>४० | १३९<br>२६ | १५७<br>८ | १७६<br>२ |
| अंतर-खोटकाः | ११<br>२७ | ११<br>३१ | १३<br>३६ | १४<br>४० | १५<br>४३ | १६<br>४६ | १७<br>४२ | १८<br>५४ | १९<br>५६ |

| धनुरंशाः | १९ | २० | २१ | २२ | २३ | २४ | २५ | २६ | २७ |
|---|---|---|---|---|---|---|---|---|---|
| उत्क्रम-<br>जीवा | १९५<br>५८ | २१६<br>५६ | २३८<br>५७ | २६१<br>५८ | २८६<br>११ | ३११<br>१४ | ३३७<br>१८ | ३६४<br>२० | ३९२<br>२१ |
| अंतर-<br>कोष्टकाः | २०<br>५८ | २२<br>१ | २३<br>१ | २४<br>३ | २५<br>३ | २६<br>४ | २७<br>२ | २८<br>१ | २९<br>० |

| धनुरंशाः | २८ | २९ | ३० | ३१ | ३२ | ३३ | ३४ | ३५ | ३६ |
|---|---|---|---|---|---|---|---|---|---|
| उत्क्रम-<br>जीवा | ४२१<br>२१ | ४५१<br>२३ | ४८२<br>१९ | ५१४<br>१२ | ५४७<br>२ | ५८०<br>४७ | ६१५<br>२८ | ६५१<br>३ | ६८७<br>३२ |
| अंतर-<br>कोष्टकाः | ३०<br>२ | ३०<br>५६ | ३१<br>५३ | ३२<br>५० | ३३<br>४५ | ३४<br>४१ | ३५<br>३५ | ३६<br>२९ | ३७<br>२३ |

| धनुरंशाः | ३७ | ३८ | ३९ | ४० | ४१ | ४२ | ४३ | ४४ | ४५ |
|---|---|---|---|---|---|---|---|---|---|
| उत्क्रम-<br>जीवा | ७२४<br>५५ | ७६३<br>१० | ८०२<br>१९ | ८४२<br>१४ | ८८३<br>३ | ९२४<br>४१ | ९६७<br>८ | १०१०<br>२३ | १०५४<br>२५ |
| अंतर-<br>कोष्टकाः | ३८<br>१५ | ३९<br>९ | ३९<br>५८ | ४०<br>४९ | ४१<br>३८ | ४२<br>२७ | ४३<br>१५ | ४४<br>२ | ४४<br>४९ |

| धनुरंशाः | ४६ | ४७ | ४८ | ४९ | ५० | ५१ | ५२ | ५३ | ५४ |
|---|---|---|---|---|---|---|---|---|---|
| उत्क्रम-<br>जीवा | १०९९<br>१४ | ११४४<br>४८ | ११९१<br>८ | १२३८<br>११ | १२८५<br>५८ | १३३४<br>२७ | १३८३<br>३८ | १४३३<br>२८ | १४८३<br>५८ |
| अंतर-<br>कोष्टकाः | ४५<br>३४ | ४६<br>२० | ४७<br>३ | ४७<br>४० | ४८<br>२९ | ४९<br>१० | ४९<br>५१ | ५०<br>३० | ५१<br>९ |

| धनुरंशाः | ५५ | ५६ | ५७ | ५८ | ५९ | ६० | ६१ | ६२ | ६३ |
|---|---|---|---|---|---|---|---|---|---|
| उत्क्रम-<br>जीवा | १५३५<br>७ | १५८६<br>५४ | १६३९<br>१८ | १६९२<br>१० | १७४५<br>५२ | १८००<br>० | १८५४<br>४१ | १९०९<br>५४ | १९६५<br>३८ |
| अंतर-<br>कोष्टकाः | ५१<br>४७ | ५२<br>२४ | ५२<br>५९ | ५३<br>३५ | ५४<br>८ | ५४<br>४१ | ५५<br>१३ | ५५<br>४२ | ५६<br>१२ |

| धनुरंशाः | ६४ | ६५ | ६६ | ६७ | ६८ | ६९ | ७० | ७१ | ७२ |
|---|---|---|---|---|---|---|---|---|---|
| उत्क्रम-जीवा | २०२१<br>५२ | २०७८<br>३४ | २१३५<br>४५ | २१९३<br>२१ | २२५१<br>२५ | २३०९<br>५३ | २३८८<br>४४ | २४२७<br>५७ | २४८७<br>३० |
| अंतर-कोष्टकाः | ५६<br>४२ | ५७<br>११ | ५७<br>३६ | ५८<br>४ | ५८<br>२८ | ५८<br>५१ | ५९<br>१३ | ५९<br>३३ | ५९<br>५८ |

| धनुरंशाः | ७३ | ७४ | ७५ | ७६ | ७७ | ७८ | ७९ | ८० | ८१ |
|---|---|---|---|---|---|---|---|---|---|
| उत्क्रम-जीवा | २५४७<br>२८ | २६०७<br>४२ | २६६८<br>१५ | २७२९<br>५ | २७९०<br>११ | २८५१<br>३१ | २९१२<br>५ | २९७४<br>५२ | ३०३६<br>५० |
| अंतर-कोष्टकाः | ६०<br>१४ | ६०<br>३३ | ६०<br>५० | ६१<br>६ | ६१<br>२० | ६१<br>३४ | ६१<br>४२ | ६१<br>५८ | ६२<br>९ |

| धनुरंशाः | ८२ | ८३ | ८४ | ८५ | ८६ | ८७ | ८८ | ८९ | ९० |
|---|---|---|---|---|---|---|---|---|---|
| उत्क्रम-जीवा | ३०९८<br>५९ | ३१६१<br>१६ | ३२२३<br>४२ | ३२८६<br>१४ | ३३४८<br>५३ | ३४११<br>३५ | ३४७४<br>२२ | ३५३७<br>१० | ३६००<br>० |
| अंतर-कोष्टकाः | ६२<br>१७ | ६२<br>२६ | ६२<br>३२ | ६२<br>३९ | ६२<br>४२ | ६२<br>४७ | ६२<br>४८ | ६२<br>५० | ०<br>० |

इत्युत्क्रमज्याः सांतराः ॥ अत्रोदाहरणम् । रवेः परमक्रांतिभागाः २३।३५ एषां भुजज्यानयनार्थमेते एव भुजांशाः कल्प्यंते । राशित्रयस्य भुज इति संज्ञा । तत्रैको राशिस्त्रिंशदंशाः। एतेषां क्रमेण भुजज्यानयनम् । यथा क्रमज्याकोष्टकेषु त्रयोविंशत्यंशानामधस्तात्प्राप्तं फलं कलाः १४०६।३९ तदंतरं ५७।३६ अनेनांतरेण भुजभागानामधस्था कला ३५ गुणिता जाता १९९५।१२६० अधः षष्ट्या भक्ते लब्धं २१ उपरि क्षिप्यंते जाता त्रिकला २०१६ आसां षष्ट्या भागे लब्धाः कलाः ३३ विकलाः ३६ पूर्वांके १४०६।३९ एवं रूपे योज्यंते । जाता परमक्रांतिभागानां क्रमेण भुजज्याकलादिका १४४०।१५ ॥

अथ क्रमेण कोटिज्यानयनं ॥ यथा रवेः परमक्रांतिभागा एव भुजभागाः २३।३५ ते नवतेः शोध्यंते शेषा अंशाः ६६।२५ एते कोटिभागा जाताः । ततः क्रमज्याकोष्टकेषु षट्षष्टिभागानामधः प्राप्तं फलं कला ३२८८।४६ तदग्रांतरं २५।३ अनेनांतरेण कोटिभागानामधः स्थिताः कलाः २५ ताड्यंते । जाताः ६२५।७५ अधः षष्ट्या भागे लब्धमेकं १ तदुपरि क्षिप्तं जाता विकलाः ६२६ आसां षष्ट्या ६० भागे लब्धाः

कलाः १० विकलाः २६ एता उपरितनांके क्रमेण क्षिप्यंते जाताः कलाः परमक्रांतेः कोटिभागानां कलादिका ज्या ३२९९।१२ ॥

अथोत्क्रमेण भुजज्यानयनम् ॥ यथा पूर्वोक्ता एव भुजभागाः २३।३५ तत उत्क्रमज्याकोष्टकेषु त्रयोविंशतिभागानां अधः प्राप्तकलाः २८६ विकलाः ११ तदूर्ध्वस्थमंतरं २५।३ अनेनांकेन भुजभागानामधस्थाः कला ३५ हन्यंते जाता ८७५।१०५ अधोंकस्य षष्ट्या ६० भागे लब्धं १ उपरितने क्षिप्ते जाता विकलाः ८७६ आसां षष्टि-६० भागे लब्धाः कलाः १४ विकलाः ३६ एताः पूर्वोक्ते कलांके २८६ योज्यंते जाताः परमक्रांतेरुत्क्रमज्याकलादिका ३००।४७ ।

अथोत्क्रमेण कोटिज्यानयनम् ॥ यथा पूर्वोक्ता एव कोटिभागाः ६६।२५ तत उत्क्रमज्याकोष्टकेषु षट्षष्टिभागानामधस्तात् फलं कला २१३५ विकलाः ४५ तदूर्ध्वोऽन्तरं ५७।३६ अनेन कोटिभागानामधस्थाः कलाः २५ गुणिता जाताः १४२५।९०० अधस्थांकस्य षष्ट्या ६० भागे लब्धाः कलाः १५ पूर्वराशौ क्षिप्ता जाता विकलाः १४४० आसां षष्टि-६० भागे लब्धाः कलाः २४ एते पूर्वोक्तफलांके २११५।४५ न्यस्यंते जाताः परमक्रांतेः कोटिभागानां कलादिका उत्क्रमज्या २१५९।४५ एवं सर्वत्र क्रमोत्क्रमाभ्यां भुजकोटिज्यासाधनम् ॥ ५ ॥

अथ भुजज्याकोटिज्ययोश्चापसाधनम्—

## ऊने फलांके भुजकोटिमौर्व्योस्तदूर्ध्वगाश्चापलवाः स्थितांकाः ॥
## षष्ट्या हताश्चांतरकोष्टभक्ताः क्रमोत्क्रमाभ्यां तदधः कलादि ॥ ६ ॥

पूर्वं भुजज्या कोटिज्या च साधिता तस्याः प्रत्यंशफलज्यांशे पातिते तदूर्ध्वकोष्टका अंका धनुरंशा भवंति । शेषं च षष्ट्या ६० गुणितं तत्कोष्टकाधः स्थितांतरांकेन विभक्तं धनुरंशानामधस्तात्फलं कलादिकं भवति । ( एवमंशाद्यं धनुर्भवति )

अत्रोदाहरणम्—पूर्वं क्रमानीता भुजज्या १४४०।१५ अस्या मध्यात्त्रयोविंशतितमकोष्टकाधः स्थितक्रमज्याकोष्टकांकाः १४०६।२९ पात्यंते । शेषं ३३।३६ षष्टिघ्नं जातं २०१६ एतदधः कोष्टकांतरांकेन ५७।३६ भक्ते लब्धं कलाः ३५ एवं भुजज्यातो धनुरंशाः २३।३५ संपन्नाः । एवं भुजज्यातः कोटिज्यातश्च क्रमोत्क्रमाभ्यां चापसाधनं कार्यम् ॥

अथ राशित्रयस्य परमक्रांतिकोष्टकाः सांतरा लिख्यन्ते—

| अंशाः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |
|---|---|---|---|---|---|---|---|---|---|
| क्रांतयः | २४<br>० | ४८<br>० | ७१<br>५९ | ९५<br>५७ | ११९<br>५४ | १४३<br>४९ | १६७<br>४० | १९१<br>३० | २१५<br>१८ |
| अंतरम् | २४<br>० | २३<br>५९ | २३<br>५८ | २३<br>५७ | २३<br>५५ | २३<br>५१ | २३<br>५० | २३<br>४८ | २३<br>४४ |

| अंशाः | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ |
|---|---|---|---|---|---|---|---|---|---|
| क्रांतयः | २३९<br>२ | २६२<br>४२ | २८६<br>१७ | ३०९<br>४८ | ३३३<br>१६ | ३५६<br>३७ | ३७९<br>५३ | ४०३<br>२ | ४२६<br>५ |
| अंतरम् | २३<br>४० | २३<br>३५ | २३<br>३१ | २३<br>२८ | २३<br>२१ | २३<br>१६ | २३<br>९ | २३<br>३ | २२<br>५७ |

| अंशाः | १९ | २० | २१ | २२ | २३ | २४ | २५ | २६ | २७ |
|---|---|---|---|---|---|---|---|---|---|
| क्रांतयः | ४४९<br>२ | ४७१<br>५३ | ४९४<br>३६ | ५१७<br>११ | ५३९<br>३६ | ५६१<br>५५ | ५८४<br>४ | ६०६<br>३ | ६२७<br>५४ |
| अंतरम् | २२<br>५१ | २२<br>४३ | २२<br>३५ | २२<br>२५ | २२<br>१९ | २२<br>९ | २१<br>५९ | २१<br>५१ | २१<br>३९ |

| अंशाः | २८ | २९ | ३० | ३१ | ३२ | ३३ | ३४ | ३५ | ३६ |
|---|---|---|---|---|---|---|---|---|---|
| क्रांतयः | ६४९<br>३३ | ६७१<br>३ | ६९२<br>२२ | ७१३<br>२८ | ७३४<br>२५ | ७५५<br>९ | ७७५<br>४० | ७९५<br>५९ | ८१६<br>४ |
| अंतरम् | २१<br>३० | २१<br>१९ | २१<br>६ | २०<br>५७ | २०<br>४४ | २०<br>३१ | २०<br>१९ | २०<br>५ | १९<br>५२ |

| अंशाः | ३७ | ३८ | ३९ | ४० | ४१ | ४२ | ४३ | ४४ | ४५ |
|---|---|---|---|---|---|---|---|---|---|
| क्रांतयः | ८३५<br>५५ | ८५५<br>३९ | ८७४<br>५९ | ८९४<br>६ | ९१३<br>१ | ९३१<br>४४ | ९५०<br>२ | ९६८<br>९ | ९८६<br>१ |
| अंतरम् | १९<br>४४ | १९<br>२० | १९<br>७ | १८<br>५५ | १८<br>४३ | १८<br>१८ | १८<br>७ | १७<br>५२ | १७<br>३३ |

| अंशाः | ४६ | ४७ | ४८ | ४९ | ५० | ५१ | ५२ | ५३ | ५४ |
|---|---|---|---|---|---|---|---|---|---|
| क्रांतयः | १००३<br>३४ | १०२०<br>४८ | १०३७<br>४९ | १०५४<br>२९ | १०७०<br>५० | १०८६<br>५३ | ११०२<br>३८ | १११८<br>२ | ११३३<br>६ |
| अंतरम् | १७<br>१४ | १७<br>१ | १६<br>४० | १६<br>२१ | १६<br>३ | १५<br>४५ | १५<br>२४ | १५<br>४ | १४<br>४४ |

| अंशाः | ५५ | ५६ | ५७ | ५८ | ५९ | ६० | ६१ | ६२ | ६३ |
|---|---|---|---|---|---|---|---|---|---|
| क्रांतयः | ११४७<br>५० | ११६२<br>१५ | ११७६<br>१९ | ११९०<br>० | १२०३<br>२० | १२१६<br>२० | १२२८<br>५७ | १२४१<br>११ | १२५३<br>१ |
| अंतरम् | १४<br>२५ | १४<br>४ | १३<br>४१ | १३<br>२० | १३<br>० | १२<br>३७ | १२<br>१४ | ११<br>५० | ११<br>२८ |

| अंशाः | ६४ | ६५ | ६६ | ६७ | ६८ | ६९ | ७० | ७१ | ७२ |
|---|---|---|---|---|---|---|---|---|---|
| क्रांतयः | १२६४<br>२९ | १२७५<br>३५ | १२८६<br>१० | १२९६<br>३४ | १३०६<br>२७ | १३१५<br>५४ | १३२४<br>५९ | १३३३<br>३७ | ११३४<br>५३ |
| अंतरम् | ११<br>६ | १०<br>३५ | १०<br>२४ | ९<br>५६ | ९<br>२७ | ९<br>५ | ८<br>३८ | ८<br>१६ | ७<br>४९ |

| अंशाः | ७३ | ७४ | ७५ | ७६ | ७७ | ७८ | ७९ | ८० | ८१ |
|---|---|---|---|---|---|---|---|---|---|
| क्रांतयः | १३४९<br>४२ | १३५७<br>५ | १३६४<br>१ | १३७०<br>३२ | १३७६<br>३५ | १३८२<br>१४ | १३८७<br>२७ | १३९२<br>१४ | १३९६<br>३२ |
| अंतरम् | ७<br>३३ | ६<br>५६ | ६<br>३१ | ६<br>३ | ५<br>३९ | ५<br>१३ | ४<br>४७ | ४<br>१८ | ३<br>५३ |

| अंशाः | ८२ | ८३ | ८४ | ८५ | ८६ | ८७ | ८८ | ८९ | ९० |
|---|---|---|---|---|---|---|---|---|---|
| क्रांतयः | १४००<br>२५ | १४०३<br>५० | १४०६<br>४६ | १४०९<br>१८ | १४११<br>२२ | १४१२<br>५८ | १४१४<br>५ | १४१४<br>४७ | १४१५<br>० |
| अंतरम् | ३<br>२५ | २<br>५६ | २<br>३२ | २<br>४ | १<br>३६ | १<br>७ | ०<br>४२ | ०<br>१३ | ०<br>० |

अथ क्रांत्यानयनम्—

लवादधश्चेत्कलिकादिकं स्यादतीतभोग्यांतरताडितं तत् ।
षष्ट्या हृतं भुक्तफले नियुक्तं यंत्रे स्फुटाः क्रांतिकला भवंति ॥ ७ ॥

व्याख्या ॥ लवानां भुजांशानामधस्ताद्यदि कलिकादिकं फलं भवति तदा तदतीतभोग्यांतरांकताडितं षष्ट्या ६० भक्तं भुक्तफले क्षिप्तं च यंत्रे स्फुटाः क्रांतिकला भवंति ॥

अत्रोदाहरणम्–भुजांशाः १०।३० ततः क्रांतिफलज्याकोष्टकेषु दशानामधःप्राप्तं फलं फलादि २३९।२ तदग्रेऽन्तरं २३।४० अनेनांतरेण पूर्वोक्तांशिराहुणिता जाता। यंत्र० २

६९०।१२०० अधः पष्टिभक्ते लब्धं २० उपरि क्षिप्ते जातं ७१०।१२०० आसां षष्ट्याभागे लब्धं ११।५० एवद्भुक्तफलेन युक्तं जाता विकलाः २५०।५२ एवं सर्वत्र। यदि लवानामधः कलिकादिकं न भवति तत्रैवं प्रक्रिया। यथा भुजांशाः ९० तेषामधः कलिकादिकं नास्ति। ततः क्रांतिफलज्याकोष्टकेषु नवलंशानामधः प्राप्तं फलं कलादि १४१५ एता एव नवतिभागात्मकस्य राशित्रयस्य परमक्रांतिकला भवंति आसामेव कलानां षष्टि ६० भागे लब्धाः परमक्रांत्यंशाः २३।१५ एवमन्यत्रापि क्रांतिसाधनं कार्यम् ॥

अथ प्रत्यंशं राशिपङ्क्तस्य स्वाहोरात्रप्रमाणोत्पादनम्—

भुजांशकानां विपरीतमौर्वी मेषप्रमाणेन हता हृता च।
भुजज्यया तु क्रमया ततो यल्लब्धं फलं तच्छकलं दिनस्य ॥ ८ ॥

व्याख्या ॥ भुजभागानां या विपरीतमौर्वी उत्क्रमज्या सा मेषप्रमाणेन गुणिता भुजक्रमज्यया भक्ता ततस्तस्माद्यत्फलं तद्दिनस्य शकलं खंडं भवति। अत्रोदाहरणम्-यथा प्रथमांशभुजलवाः ११०१० एषामुत्क्रमज्या ०।३३ इयं मेषतुलाप्रमाण १९।३८ रूपेण गुणिता जाता ०।६२७।१२५४ अधः पष्टिभागे लब्धं २० शेषं ५४ लब्धांका २० उपरितनांके ६२७ रूपे योजिताः। ६४७ एतेषामपि षष्टि ६० भागे लब्धं १० उपरितनशून्यस्थाने स्थाप्यंते जाताः क्रमेण कलादयः १०।४७।५४ अतः अस्याः भुजक्रमज्यया ६२।५० भाजनार्थं ( १० ) षष्टिगुणिते तन्मध्ये ४७ क्षिप्तं ६४७।५४ एवं भुजक्रमज्यांकेऽपि ( ६२ ) षष्टिगुणिते पंचाशन्मिलिते जाताः ३७७० एभिः पूर्वांकस्य भागे लब्धं भागाद्यं ०।१० एतत्प्रथमांशस्य द्युज्याफलं शकलमुच्यते। एवं नवत्यंशान् यावत् द्युज्याखंडान्युत्पाद्यानि ॥

अथ नवतेरधिकांशेषु द्युज्याखंडोत्पादनम्—

प्रवर्द्धमाने नवतेरथांशे कोटिक्रमज्यांतिमया युता सा।
तुलाजमानेन हता विभक्ता क्रमज्यया बाहुजया लवादि ॥ ९ ॥

व्याख्या ॥ नवतेरपरि अशीत्यधिकशतपर्यंतं यदंशवृद्धिर्भवति तदा कोटिक्रमज्या [1]अंतिमज्यासहिता मेषतुलामानेन गुणिता भुजक्रमज्यया[2] भक्ता यल्लब्धं फलं लवादि नवत्यधिकांशानां द्युज्याखंडानि भवंति ॥

अत्रोदाहरणम्—राश्यादिकेंद्रं ३।१।०।० केंद्रात् भुजानयनं यथा—

आत्रितयादविकल्प्यं त्र्यधिकं केंद्रं विशोधयेत् षड्भ्यः।
षडधिकमूनं पड्भिर्नवाधिकं शोधयेच्चक्रात् ॥ १० ॥

---

१ "अंतिमज्यया सहिता" इति रा. ग. पुस्तके। २ "भुजक्रमज्यया भक्ता" इति रा. ग. पुस्तके।

व्याख्या ॥ राशित्रयस्य केंद्रमिति संज्ञा । तच्च केंद्रं आश्रितयादविकल्प्यम् । तस्मात्किंचित्पाल्यमित्यर्थः । तत्र केंद्रमेव भुजः । तत् त्र्यधिकं सत्षड्भ्यः शोधयेत् । षडधिकं षड्भिरूनं कार्यम् । नवाधिकं केंद्रं चक्राद्द्वादशकाद्विशोधयेत् । सर्वत्र त्रिदोर्पांको भुजः । अत्र त्र्यधिकं केंद्रमस्तीति षड्भ्यः पूर्वोक्तः केंद्रांकः ३।१।०।० शोध्यते शेषः केंद्रस्य भुजः २।२९।०।० अतः कोटिरानीयते । राशित्रयादस्मिन् भुजे पातिते कोटिः ०।१।०।० अस्याः क्रमज्या ६२।५० अंत्याज्या (३६००) सहिता ३६६२।५० मेषतुलामानेनानेन १९।२८ गोमूत्रिकया गुणिता जातो राशिः ६९५७८।९५०। १३९१५६।१९०० अधःस्थांकस्य १९०० षष्टि ६० भक्ते लब्धं ३१ एतेषां ९५० मध्ये क्षिप्तं जाताः ९८१ एते १३९१५६ एतन्मध्ये क्षिप्ता जाताः १४०१३७।४० एषामपि षष्टिभागे लब्धाः २३३५ शेषं ३७।४० लब्धा उपर्यंके ६९५७८ क्षिप्ता जाताः ७१९१३।३७।४० एषां भुजभागानां ८९ क्रमज्या ३५९९।२७ भागे लब्धं एकनवत्यंशानां द्युज्याखंडफलं लवाद्यं २०।०।५ ॥

एषां द्युज्याफलानामुपयोगमाह—

इदं भषक्रार्धभवांशकानां द्युज्याफलं स्पष्टतरं यदुक्तम् ।
अक्षांशकेभ्यः सुधिया तदर्धं केंद्रे तथा व्यासविधौ विधेयम् ११

व्याख्या ॥ भचक्रार्धभवानामशीत्यधिकशतभागानां स्पष्टतरं द्युज्याफलमुक्तम् । अक्षांशकेभ्यः केंद्रव्यासोत्पादनार्थं सुधिया द्युज्याफलस्यार्धं करणीयम् । एतद्द्युज्याफलं सौम्यध्रुवादेकांशतः प्रत्यंशं याम्यध्रुवाभिमुखं अशीत्यधिकशतभागपर्यंतं ज्ञातव्यम् । एतदुक्तवलयोत्पादने दर्शयिष्यते ॥

अथ प्रत्यंशं राशिषट्कस्य द्युज्याफलकोष्टकाः सांतरा लिख्यंते—

| अंशाः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |
|---|---|---|---|---|---|---|---|---|---|
| द्युज्याफलं | ०<br>१० | ०<br>२० | ०<br>३१ | ०<br>४२ | ०<br>५२ | १<br>२ | १<br>१२ | १<br>२२ | १<br>३२ |
| फलांतरं | ०<br>१० | ०<br>१० | ०<br>११ | ०<br>१० | ०<br>१० | ०<br>१० | ०<br>१० | ०<br>१० | ०<br>१० |

| अंशाः | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ |
|---|---|---|---|---|---|---|---|---|---|
| द्युज्याफलं | १<br>४३ | १<br>५४ | २<br>४ | २<br>१४ | २<br>२५ | २<br>३५ | २<br>४६ | २<br>५६ | ३<br>७ |
| फलांतरं | ०<br>११ | ०<br>१० | ०<br>१० | ०<br>११ | ०<br>११ | ०<br>११ | ०<br>१० | ०<br>११ | ०<br>१० |

| अंशाः | १९ | २० | २१ | २२ | २३ | २४ | २५ | २६ | २७ |
|---|---|---|---|---|---|---|---|---|---|
| भुज्या-फलं | ३<br>१७ | ३<br>२८ | ३<br>३८ | ३<br>४९ | ४<br>० | ४<br>१० | ४<br>२१ | ४<br>३२ | ४<br>४३ |
| फलांतरं | ०<br>११ | ०<br>१६ | ०<br>११ | ०<br>११ | ०<br>१० | ०<br>११ | ०<br>११ | ०<br>११ | ०<br>११ |

| अंशाः | २८ | २९ | ३० | ३१ | ३२ | ३३ | ३४ | ३५ | ३६ |
|---|---|---|---|---|---|---|---|---|---|
| भुज्या-फलं | ४<br>५४ | ५<br>५ | ५<br>१६ | ५<br>२७ | ५<br>३८ | ५<br>४९ | ६<br>० | ६<br>१२ | ६<br>२३ |
| फलांतरं | ०<br>११ | ०<br>११ | ०<br>११ | ०<br>११ | ०<br>११ | ०<br>११ | ०<br>१२ | ०<br>११ | ०<br>११ |

| अंशाः | ३७ | ३८ | ३९ | ४० | ४१ | ४२ | ४३ | ४४ | ४५ |
|---|---|---|---|---|---|---|---|---|---|
| भुज्या-फलं | ६<br>३४ | ६<br>४६ | ६<br>५७ | ७<br>९ | ७<br>२१ | ७<br>३२ | ७<br>४४ | ७<br>५६ | ८<br>८ |
| फलांतरं | ०<br>१२ | ०<br>११ | ०<br>१२ | ०<br>१२ | ०<br>१२ | ०<br>११ | ०<br>१२ | ०<br>१२ | ०<br>१२ |

| अंशाः | ४६ | ४७ | ४८ | ४९ | ५० | ५१ | ५२ | ५३ | ५४ |
|---|---|---|---|---|---|---|---|---|---|
| भुज्या-फलं | ८<br>२० | ८<br>३२ | ८<br>४४ | ८<br>५७ | ९<br>१० | ९<br>२२ | ९<br>३५ | ९<br>४८ | १०<br>१ |
| फलांतरं | ०<br>१२ | ०<br>१२ | ०<br>१३ | ०<br>१३ | ०<br>१२ | ०<br>१३ | ०<br>१३ | ०<br>१३ | ०<br>१३ |

| अंशाः | ५५ | ५६ | ५७ | ५८ | ५९ | ६० | ६१ | ६२ | ६३ |
|---|---|---|---|---|---|---|---|---|---|
| भुज्या-फलं | १०<br>१४ | १०<br>२७ | १०<br>४० | १०<br>५३ | ११<br>६ | ११<br>२० | ११<br>३४ | ११<br>४८ | १२<br>२ |
| फलांतरं | ०<br>१३ | ०<br>१३ | ०<br>१३ | ०<br>१३ | ०<br>१४ | ०<br>१४ | ०<br>१४ | ०<br>१४ | ०<br>१४ |

| अंशाः | ६४ | ६५ | ६६ | ६७ | ६८ | ६९ | ७० | ७१ | ७२ |
|---|---|---|---|---|---|---|---|---|---|
| ध्रुज्या-फलं | १२<br>१६ | १२<br>३१ | १२<br>४६ | १३<br>१ | १३<br>१६ | १३<br>३१ | १३<br>४६ | १४<br>१ | १४<br>१६ |
| फलांतरं | ०<br>१४ | ०<br>१५ | ०<br>१५ | ०<br>१५ | ०<br>१५ | ०<br>१५ | ०<br>१५ | ०<br>१५ | ०<br>१६ |

| अंशाः | ७३ | ७४ | ७५ | ७६ | ७७ | ७८ | ७९ | ८० | ८१ |
|---|---|---|---|---|---|---|---|---|---|
| ध्रुज्या-फलं | १४<br>३२ | १४<br>४८ | १५<br>४ | १५<br>२१ | १५<br>३८ | १५<br>५५ | १६<br>१२ | १६<br>२९ | १६<br>४६ |
| फलांतरं | ०<br>१६ | ०<br>१६ | ०<br>१७ | ०<br>१७ | ०<br>१७ | ०<br>१७ | ०<br>१७ | ०<br>१७ | ०<br>१८ |

| अंशाः | ८२ | ८३ | ८४ | ८५ | ८६ | ८७ | ८८ | ८९ | ९० |
|---|---|---|---|---|---|---|---|---|---|
| ध्रुज्या-फलं | १७<br>४ | १७<br>२२ | १७<br>४१ | १८<br>० | १८<br>१९ | १८<br>३९ | १८<br>५९ | १९<br>१९ | १९<br>३९ |
| फलांतरं | ०<br>१८ | ०<br>१९ | ०<br>१९ | ०<br>१९ | ०<br>२० | ०<br>२० | ०<br>२० | ०<br>२० | ०<br>२१ |

| अंशाः | ९१ | ९२ | ९३ | ९४ | ९५ | ९६ | ९७ | ९८ | ९९ |
|---|---|---|---|---|---|---|---|---|---|
| ध्रुज्या-फलं | २०<br>० | २०<br>२१ | २०<br>४२ | २१<br>४ | २१<br>२६ | २१<br>४९ | २२<br>१२ | २२<br>३५ | २३<br>० |
| फलांतरं | ०<br>२१ | ०<br>२१ | ०<br>२२ | ०<br>२२ | ०<br>२३ | ०<br>२३ | ०<br>२३ | ०<br>२४ | ०<br>२५ |

| अंशाः | १०० | १०१ | १०२ | १०३ | १०४ | १०५ | १०६ | १०७ | १०८ |
|---|---|---|---|---|---|---|---|---|---|
| ध्रुज्या-फलं | २३<br>२५ | २३<br>५० | २४<br>१६ | २४<br>४३ | २५<br>१० | २५<br>३७ | २६<br>५ | २६<br>३४ | २७<br>३ |
| फलांतरं | ०<br>२५ | ०<br>२६ | ०<br>२७ | ०<br>२७ | ०<br>२७ | ०<br>२८ | ०<br>२९ | ०<br>२९ | ०<br>२९ |

| अंशाः | १०९ | ११० | १११ | ११२ | ११३ | ११४ | ११५ | ११६ | ११७ |
|---|---|---|---|---|---|---|---|---|---|
| द्युज्या-फलं | २७<br>३३ | २८<br>३ | २८<br>३४ | २९<br>७ | २९<br>४१ | ३०<br>१५ | ३०<br>५० | ३१<br>२७ | ३२<br>४ |
| फलांतरं | ०<br>३० | ०<br>३१ | ०<br>३३ | ०<br>३४ | ०<br>३४ | ०<br>३५ | ०<br>३७ | ०<br>३७ | ०<br>३८ |

| अंशाः | ११८ | ११९ | १२० | १२१ | १२२ | १२३ | १२४ | १२५ | १२६ |
|---|---|---|---|---|---|---|---|---|---|
| द्युज्या-फलं | ३२<br>४२ | ३३<br>२१ | ३४<br>२ | ३४<br>४४ | ३५<br>२७ | ३६<br>११ | ३६<br>५७ | ३७<br>४५ | ३८<br>३४ |
| फलांतरं | ०<br>३९ | ०<br>४० | ०<br>४२ | ०<br>४३ | ०<br>४४ | ०<br>४६ | ०<br>४८ | ०<br>४९ | ०<br>५१ |

| अंशाः | १२७ | १२८ | १२९ | १३० | १३१ | १३२ | १३३ | १३४ | १३५ |
|---|---|---|---|---|---|---|---|---|---|
| द्युज्या-फलं | ३९<br>२५ | ४०<br>१७ | ४१<br>११ | ४२<br>८ | ४३<br>५ | ४४<br>८ | ४५<br>१२ | ४६<br>१८ | ४७<br>२६ |
| फलांतरं | ०<br>५२ | ०<br>५४ | ०<br>५७ | ०<br>५७ | १<br>३ | १<br>४ | १<br>६ | १<br>८ | १<br>१२ |

| अंशाः | १३६ | १३७ | १३८ | १३९ | १४० | १४१ | १४२ | १४३ | १४४ |
|---|---|---|---|---|---|---|---|---|---|
| द्युज्या-फलं | ४८<br>३८ | ४९<br>५३ | ५१<br>११ | ५२<br>३३ | ५३<br>५९ | ५५<br>२८ | ५७<br>२ | ५८<br>४४ | ६०<br>२८ |
| फलांतरं | १<br>१५ | १<br>१८ | १<br>२२ | १<br>२६ | १<br>२९ | १<br>३४ | १<br>४२ | १<br>४४ | १<br>५१ |

| अंशाः | १४५ | १४६ | १४७ | १४८ | १४९ | १५० | १५१ | १५२ | १५३ |
|---|---|---|---|---|---|---|---|---|---|
| द्युज्या-फलं | ६२<br>१९ | ६४<br>१७ | ६६<br>२० | ६८<br>३२ | ७०<br>५१ | ७३<br>२० | ७५<br>५९ | ७८<br>४९ | ८१<br>५१ |
| फलांतरं | १<br>५८ | २<br>३ | २<br>१२ | २<br>१९ | २<br>२९ | २<br>३९ | २<br>५० | ३<br>२ | ३<br>१६ |

| अंशाः | १५४ | १५५ | १५६ | १५७ | १५८ | १५९ | १६० | १६१ | १६२ |
|---|---|---|---|---|---|---|---|---|---|
| द्युज्या-फलं | ८५<br>७ | ८८<br>३८ | ९२<br>२७ | ९६<br>३५ | १०१<br>६ | १०५<br>५७ | १११<br>२७ | ११७<br>२६ | १२४<br>४ |
| फलांतरं | ३<br>३१ | ३<br>४९ | ४<br>८ | ४<br>३१ | ४<br>५१ | ५<br>३० | ५<br>५९ | ६<br>३८ | ७<br>२५ |

| अंशाः | १६३ | १६४ | १६५ | १६६ | १६७ | १६८ | १६९ | १७० | १७१ |
|---|---|---|---|---|---|---|---|---|---|
| द्युज्या-फलं | १३१<br>२९ | १३९<br>५० | १४९<br>१५ | १६०<br>२ | १७२<br>२८ | १८६<br>५८ | २०४<br>३ | २२४<br>४० | २४९<br>४२ |
| फलांतरं | ८<br>२१ | ९<br>२५ | १०<br>४७ | १२<br>२६ | १४<br>३० | १७<br>५ | २०<br>३७ | २५<br>२ | ३१<br>१९ |

| अंशाः | १७२ | १७३ | १७४ | १७५ | १७६ | १७७ | १७८ | १७९ | १८० |
|---|---|---|---|---|---|---|---|---|---|
| द्युज्या-फलं | २८१<br>१ | ३२१<br>२९ | ३७२<br>२ | ४५०<br>२ | ५९२<br>३१ | ७५०<br>२९ | ११२५<br>५ | २२५०<br>४ | ०<br>० |
| फलांतरं | ४०<br>२८ | ५०<br>३३ | ७८<br>० | ११२<br>२९ | १८७<br>५८ | ३७४<br>३६ | ११२४<br>५९ | ०<br>४ | ०<br>० |

अथ द्युज्याफलानयनम्—

**भवेल्लवाधः कलिकादिकं यत्तत् खंडयोरंतरसंगुणं स्यात् ।**
**षष्ठ्या हृतं भुक्तफले निविष्टं भवंत्यहज्यांशकलानि सम्यक् ॥१२॥**

व्याख्या ॥ लवानामधस्ताद्यदि कलिकादिकं भवति तदा भुक्तभोग्यखंडयोर्द्वयोर्द्वयो रंतरकेन कृतगुणं षष्ठ्या हृतं लब्धं फलं भुक्तफले निक्षिप्तं द्युज्यांशकलानि भवति ॥

अथोदाहरणम् । कल्पनया लवः १ तदधः कलास्त्रिंशत् ३० ततो द्युज्याकोष्टकेषु प्रथमांशाधः प्राप्तं फलं द्युज्याफलं ०।१० तदधोंऽतरं ०।१० अनेनांतरेणाधःस्थाः कलाः ३० गुणिताजाताः ३०० आसां षष्टिभागे लब्धं ५ उपरि शून्यस्थाने क्षिप्तं लब्धाः पंचैवकलाः स्थितास्ताः भुक्तफल १० मध्ये क्षिप्ताजाताः पंचदश १५ एवंसार्धांशस्य द्युज्याफलं ०।१५ एवमन्यत्रापि कार्यम् ॥

अथ सौम्ययंत्रे इष्टाक्षांशानामुन्नतवलयकेंद्रव्यासार्धप्रमाणानयनम्—

**पलैर्विहीना गगनाष्टचंद्राः १८० शेषास्तथाक्षाः पृथगेव धार्याः ।**
**शेषाक्षयोर्वासरखंडकेभ्यो द्युज्याफलं वै परिसाधनीयम् ॥ १३ ॥**
**तदक्षसंज्ञेन फलेन हीनं युक्तं च शेषाक्षफलं विधाय ॥**
**अर्धं विधेयं च ततः क्रमेण केंद्रं भवेद् व्यासयुतं कुजाख्ये ॥१४॥**

शेषे तथाक्षे च यथेप्सितांशाः शोध्यास्ततः पूर्ववदुक्तरीत्या ।
कार्याणि केंद्राणि सविस्तराणि कुजाख्यवृत्तात्पुरतः स्फुटानि १५

एषां व्याख्या ॥ पलशब्देनाक्षांशा उच्यंते ॥ पलैः स्वस्वदेशाक्षांशैर्गगनाष्टरूपा अशीत्यधिकशतांशा १८० हीनाः कर्तव्याः । शेषांशाः अक्षांशाश्च पृथग्धार्याः । ततोऽक्षशेषाक्षांशयोर्द्युज्याखंडकेभ्यः पूर्ववद्द्युज्याफलमानीयाक्षांशादागतफलेनाक्षशेषफलं द्विःस्थमेकत्र हीनमपरत्र युतं च कृत्वा द्वयमप्यर्धितं सत् क्रमेण केंद्रव्यासौ भुजवृत्तस्य भवतः । तदत्राक्षशेषे वाक्षे एकादिषट्पर्यंतेषु दृष्टोन्नतांशेषु पातितेषु अक्षशेषादक्षाच्च पूर्वोक्तरीत्यैव तावतामुन्नतांशानां भुजाग्रस्थितानां केंद्रव्यासानयनं कार्यम् ॥ अत्रोदाहरणम्—

यथा श्रीमद्योगिनीपुरे याम्याक्षांशाः २८।३९ एते अशीत्यधिकशत १८० मध्यात्पातंते शेषांशाः १५१।२१ एभ्यो द्युज्याफलमानीयते । यथा राशिषट्कस्य स्वाहोरात्रप्रमाणफलज्याकोष्टकेषु एकपंचाशदधिकशताधः प्राप्तं द्युज्याफलं ७५।५९ तदर्धोऽतरं २।५० अनेनांतरेणांशाधःस्थिताः कला २१ गुण्यंते जाताः ४२।१०५० । अधस्तनांकस्य षष्टि ६० भागे लब्धाः १७ एते उपरितनांके ४२ योज्यंते जाताः ५९ एते द्युज्याफलांक ७५।५९ मध्ये योज्यंते जातमक्षशेषफलं भागाद्यं ७६।५८ अनयैव रीत्या अक्षांशेभ्यः २८।३९ द्युज्याफलं प्रसाध्यम् । तदिदमक्षांशफलं भागाद्यं ५।१ तदनु पूर्वानीतं शेषांशफलं स्थानद्वये संस्थाप्याक्षांशफलमेकत्र पातयित्वाऽन्यत्र योजयित्वा चावशिष्टांशेऽर्धीकृते क्रमेण भुजवृत्तस्य केंद्रं ३५।५८।३० व्यासश्च ४०।५९।३० स्याताम् ॥

अथ भुजवृत्तादग्रेतनानामुन्नतांशानां केंद्रव्यासानयनम् । पूर्वोक्तादक्षशेषात् । १५१।२१ षड्डुन्नतांशाः पात्यंते जाताः शेषांशाः १४५।२१ तथाक्षांशेभ्योऽपि २८।३९ षट् पात्यंते जाता अक्षांशाः २२।३९ ततः पूर्वोक्तरीत्या षड्डुन्नतांशानां केंद्रं २९।३१ व्यासः ३३।२८ एवं क्रियमाणे चतुर्विंशत्युन्नतांशानां पातनाच्छेषांशाः १२७।२१ अक्षांशाः ४।३९ एभ्यः पूर्वसाधितरीत्या साधितं केंद्रं १९।३५ व्यासः २०।२४ ॥

यत्राल्पत्वादक्षांशेभ्य उन्नतांशा न पतंति तत्र युक्तिमाह—

स्युरक्षतश्चेदधिकोन्नतांशास्तेभ्योऽक्षपाते विहिते तथैव ।
द्युज्याफलेन द्वयतः प्रसिद्धं युक्तोनितं शेषभवेक्षजातम् ॥ १६ ॥
अर्धीकृतं केंद्रमिहेति तद्व्यासोऽपि तस्मात्पुरतोऽशकानाम् ।
शेषे तथाक्षे च वियोगयोगात्तथैव केंद्राणि सविस्तराणि ॥ १७ ॥

अनयोर्व्याख्या ॥ यत्राक्षांशेभ्य उन्नतांशा न पतंति तत्र शेषांशेभ्य उन्नतांशान् पातयित्वा उन्नतांशेभ्योऽक्षांशाः पात्याः । ततः प्राग्वद्द्वयोर्द्युज्याफले समानीय ते द्विःस्थ, शेषांशद्युज्याफले अक्षांशद्युज्याफले, च क्रमाद्युक्ते ऊनिते च पश्चादर्धीकृते,

तावतामुन्नतांशानां क्रमेण केंद्रव्यासौ भवतः ॥ ऊर्ध्वमीप्सितांशानां शेषांशेभ्यः पाते अक्षांशेषु योगे द्युज्याफलादिप्रक्रियायां कृतायां क्रमेण नवत्युन्नतांशानां केंद्राणि व्यासाश्च भवंति ॥

अत्रोदाहरणम् ॥ यथा पूर्वोक्ताः शेषांशाः १२७।२१ अक्षांशाश्च ४।३९* ५(६)दुन्नतांशानां बहुत्वादक्षांशेभ्यो न पतंतीत्यक्षांशास्तेभ्य एव पात्यंते शेषा ११।२१ एतेष्वक्षांशा एवातो द्युज्याफलं यथा। शेषानां द्युज्याफलं ३४।५९ अक्षांशद्युज्याफलं ०।१३ ततो द्विःस्थे शेषद्युज्याफलेऽक्षद्युज्याफलेन युक्ते वियुक्ते अर्धीकृते च त्रिंशदुन्नतांशानां केंद्रं १७।३६ व्यासः १७।२३ ततः परमीप्सितांशान् शेषांशेभ्यो विशोध्य अक्षांशेषु क्षिप्त्वा च पूर्वोक्तद्युज्याफलादिप्रक्रियया नवत्युन्नतांशपर्यंतं केंद्रव्यासा साध्यंते ॥

अथ याम्ययंत्रे इष्टाक्षांशानामुन्नतवलयकेंद्रव्यासानयनम्—

यंत्रेऽपि सौम्ये यमदिग्गतेऽपि कुजाख्यवृत्तं भवतीह तुल्यम्।
अत्रापि सौम्योदितयैव रीत्या कार्यं विशेषः पुनरेव शेषः ॥१८॥
शेषे तथाक्षे च समीहितांशाः क्षेप्या भचकार्द्धमुपैति यावत्।
भार्द्धाधिकं यत्र हि चाक्षशेषं तच्छोधितं शून्यरसानलेभ्यः १९
अक्षांशकात् प्राप्तफलेन युक्तं हीनं तदर्द्धं भवति द्वयं तत्।
अतोऽक्षशेषे पतिते भचक्राच्छेषे तथाक्षे च यथेष्टभागान् ॥२०॥
निष्काश्य दत्त्वा च कृते तथैव सर्वाणि केंद्राणि सविस्तराणि।
सौम्यानि याम्यानि च मिश्रयंत्रे निवेशनीयानि यथोदितानि २१

व्याख्या ॥ सौम्ये याम्ये च यंत्रेऽक्षांशेभ्यो भुजवृत्तानयनं तुल्यमेव। ततोऽत्रापि याम्ययंत्रे सौम्ययंत्रोक्तयैव प्रक्रियया भुजवृत्तस्य केंद्रव्यासौ साध्यौ ॥ अमतः केंद्रव्यासानयने सौम्ययंत्रादयं विशेषः। कोऽयमित्याह। शेषांशेऽक्षांशे च एकादिपद्पर्यन्ता इष्टोन्नतांशा भचकार्धमशीत्यधिकशतांशान् यावत्क्रमेण योजनीयाः। ततो द्युज्याफलानयनं सौम्ययंत्रवत् ॥ भचक्रादूर्ध्वं पुनः शून्यरसानलेभ्यः ३६० अक्षशेषे विशोधिते प्राग्वत् द्युज्याफले साधिते द्विःस्थे शेषफलेऽक्षफलेन युक्ते वियुक्तेऽर्द्धीकृते च तावतामुन्नतांशानां केंद्रव्यासौ स्याताम्। तदनु शून्यरसानलेभ्यः ३६० प्राक् शोधितेऽक्षशेषे इष्टोन्नतांशान् पातयित्वाऽक्षांशे तान् योजयित्वा च शेषे तथैव कृते नवत्यंशपर्यंतं सर्वे केंद्रव्यासा भवेयुः। एतानि सौम्यानि याम्यानि सव्यासानि केंद्राणि सौम्ययाम्यात्मके मिश्रयंत्रे सुस्थाप्यानि ॥

अत्रोदाहरणम् ॥ अक्षांशाः २८।३९ एभ्यः प्राग्वत्साधितं भुजवृत्तस्य केंद्रं

* अत्र ग. पुस्तके "शेषांशेभ्यः १२७।२१ षट् ६ उन्नतांशाः पात्यंते जाताः १२१।२१ इत्यधिकम्।

३५।५८।३० व्यासः ४०।५९।३० ततोऽक्षशेषेऽक्षे च १५।१२।१२८।३९ षड्-भतांशा योज्यंते । जाताःशेषांशाः १५७।२१ अक्षांशाः ३४।३९ एभ्यः प्राग्वत् षड्भतांशानां केंद्रं ४६।१ व्यासः ५२।९ एवं भचक्रार्द्धं यावत्केंद्रव्यासाः साध्याः । एवं क्रियमाणे च भचक्रादूर्ध्वं शेषांशाः १८१।२१ अक्षांशाः ५८।३९ अत्र भार्द्धाधिकत्वात् शेषांशाः १८१।२१ भचक्रमध्यात् ३६० शोध्यंते जाताः १७८।३९ एते शेषांशाः ॥ उभयोः प्राग्वत् द्युज्याफले साधिते शेषफले द्विःस्थानस्थेऽक्षफलेन एकत्र युक्तेऽन्यत्र वियुक्ते चार्द्धीकृते जातं त्रिंशद्भतांशानां केंद्रं ९३३।४० व्यासः ९२२।३९ ॥

अथाक्षशेषेऽक्षे च षड्भतांशाः क्षिप्यंते क्षिप्यंते च जाताः शेषांशाः १७२।३९ अक्षांशाः ६४।३९ उभयोः प्राग्वत् षट्त्रिंश ३६ द्युतांशानां केंद्रं १५९।५ व्यासः १४७।२७ अनयैव रीत्या नवत्यंशपर्यंतं केंद्रव्यासाः संपादनीयाः ॥

अथ निरक्षाल्लंकाप्रदेशात् मेरुपर्वतपर्यंतं पूर्वापरदिग्व्यापिनः सप्त ७ विभागाः तदंतर्वर्तिनां नगराणां अक्षांशज्ञानार्थमाद्यैः कल्पिताः संति । तेषां यवनभाषया इकलेमेति संज्ञा कृता ॥ शनिगुरुभौमरविशुक्रबुधसोमाः क्रमात्स्वामिनश्च । एवं निरक्षलंकाप्रदेशाद्यतिभागमक्षांशास्त्रयोदशनवलिप्ताभिर्न्यूनाः १२।५१ । मध्यरेखातः पूर्वापरभागस्था भवंति । एवं यंत्रांशास्त्रयोदश १३, षड्विंशतिः २६, एकोनचत्वारिंशत् ३९, द्विपंचाशत् ५२, पंचषष्टिः ६५, अष्टसप्ततिः ७८, नवति ९०, पर्यंताः । अनेनैव क्रमेण सप्तभागाः स्युः । परं द्विपंचाशदक्षांशान् यावन्मनुष्याणां निवासः । तदग्रतः षट्पष्ट्यंशपर्यंतं शीतबाहुल्यादंधकाराच्च मनुष्याणामल्प एव संचारः । तत्परतः किंनरगंधर्वविद्याधरसिद्धानां प्रचारा देवभूमयः ।

अथ चतुर्विभागांतर्वर्तिनां नगराणां सुखावबोधार्थमक्षांशाः प्रदर्श्यंते ॥ तद्यथा ॥ लंकायामक्षांशाः ०।०, आदने ११, तिलंगे १८, अनागूंदी १८।१०, गंगासागरे १८।२०, सह्यावासे १८।३०, देवगिरौ २०।३४, त्र्यंबके संजानदमनस्थसारिकायां २१, मक्का २१।२० श्रीभृगुकच्छ, नंदभद्रव, वटपत्र, स्तंभतीर्थ, धवलके २२, अंशावल्यां २३, सोमनाथपत्तने मांगल्यपुरे २२।१५, रैवतकाचले ( द्वारकायां, नवपत्तने ) २२।३१, उज्जयिन्यां २३।३०, धारायां २३।३०, अणहिलपुरपत्तने २४, नलपुरे २५, अजमेरौ २६, नागपुरे २६, वाराणस्यां २६।१५, लक्ष्मणावत्यां २६।२०, कडानगरे २६।२९ कान्यकुब्जे २६।३५ माणिकपुरे २६।४९, तीर ( थीर ) मुक्तौ २७, जाजनगरे २७, उद्दीसास्थाने २७।५, अयोध्यायां २७।२२ गोपालगिरौ २७।२९ बुंदी २७।३२, गोपीमंडले २७।४५, कोलजलाल्यां २८।४, कपिलायां २८।१०, शिवस्थाने २८।१५, उच्चनगरे २८।२०, यद्दनगरे २८।२८, दिल्ल्यां योगिनीपुरे २८।३९ रोहितके २८।४५, मेहार ( मारहटे ) २९।२०, मूलताने २९।४०, हांस्यां २९।४५, श्रीपीरोजनृपवासितहिंसारपि-

| यन्त्रांशा | ८२ | ८३ | ८४ | ८५ | ८६ | ८७ | ८८ | ८९ | ९० |
|---|---|---|---|---|---|---|---|---|---|
| द्वादशांगुल शंकुच्छाया | १<br>४३ | १<br>३८ | १<br>१६ | १<br>७ | ०<br>५५ | ०<br>३८ | ०<br>२५ | ०<br>१३ | ०<br>० |
| सप्तांगुल शंकुच्छाया | ०<br>५९ | ०<br>५१ | ०<br>४४ | ०<br>३६ | ०<br>२९ | ०<br>२२ | ०<br>१५ | ०<br>८ | ०<br>० |

श्रीपीरोजशकेंद्रसर्वगणके पृष्टो महद्भप्रभु
जोंत सूरिवरस्तदीयचरणाभोजैकभृंगप्रभुता ॥
सूरिश्रीमलयेंदुना विरचितेऽस्मिन्यन्त्रराजागमे
व्याख्याने गणिताभिध प्रथमकोऽध्याय समाप्तिं गत ॥
इति श्रीयन्त्रराजागमे गणिताध्याय प्रथम ॥ १ ॥

---

द्वितीयोऽध्याय ।

अथ यन्त्रघटनाध्यायो व्याख्यायते—

**आदौ यंत्रं मृन्मयं धातुजं वा विस्तीर्णं च स्वेच्छया कारयित्वा ॥**
**दैर्घ्यव्यासौ पालिवृत्तस्य तस्मिन्नार्य्यैः कार्यौ यंत्रचक्रानुमानात् १**

व्याख्या ॥ मृत्प्रसिद्धा । धातव पित्तलाद्या । मृन्मय धातुमय वा यन्त्र स्वेच्छया विस्तीर्णं विस्ताराद्य च कारयित्वा यन्त्रमुखानुमानात्तस्मिन् यन्त्रे पालिवृत्तस्य दीर्घव्यासौ आयामविस्तारौ आर्यै कार्यां । विस्तीर्णमिति पद स्वेच्छयेत्यत्र योज्यम् ॥

**याम्ये भागेऽस्य त्रिकोणं किरीटमीदृग् यंत्रं कोष्टकागारयुक्तम् ॥**
**मध्ये तस्य स्वेच्छयाक्षांशकानां पत्राण्यन्यान्युन्नतांशाश्रितानि॥२॥**

अस्य व्याख्या ॥ कार्यमित्यनुवर्तते । अस्य यन्त्रस्य याम्ये दक्षिणे भागे त्रिकोण किरीट शिर स्थितत्वान्मुकुटसदृश कार्यम् । ईदृक् तद् यन्त्र कोष्टकागारमिति प्रोक्तम्। तस्य कोष्टकागारस्य मध्ये अन्यान्युन्नतांशवलयैराश्रितान्यक्षांशाना पत्राणि स्वेच्छया कार्याणि । स्वेच्छयेत्यस्य कोऽर्थ । यावता देशाना पत्राणि कर्तुमिष्टानि तावति कार्याणि । पत्रे पत्रे च उपरि भिन्नभिन्नदेशोत्पन्नोन्नतवलयानि कार्याणि ॥

**एकं पत्रं चोन्नतांशस्य पत्राद् द्विघ्नं पिंडे साधनीयं ततोऽन्यत् ॥**
**लंकोत्पन्ना राशयो मेषमुख्याः संस्थाप्यंते यत्र धिष्ण्यैः समेताः ३**

अस्य व्याख्या ॥ उन्नतांशस्य पत्रादेक पत्रमन्यत्पिंडे द्विगुण साधनीयम् ॥ यत्पत्रे लंकोत्पन्ना मेषाद्या द्वादशराशयो धिष्ण्यै सहिता स्थाप्यते ॥ इद च पत्र भचक्राधिष्ठितत्वात् भचक्रपत्रमित्युच्यते ॥

पत्राण्येवं कोष्टकागारमध्ये मुक्त्वा साध्यास्तेषु पूर्वादिकोष्टाः ॥
पृष्ठे यंत्रस्यायते द्वे भुजाग्रे सूक्ष्मे कृत्वा छिद्रमंतर्भुजं च ॥ ४ ॥
अग्रे पश्चात्तस्य चांतेऽन्धिकोणे कृत्वा छिद्रे यंत्रनेत्रे निवेश्ये ॥
छिद्रे कृत्वा मेरुकीलं दलालिं तेन क्षिप्त्वा घोटिका सन्निवेश्या ५
युग्मम् ॥

अनयोर्व्याख्या ॥ एवं पूर्वोक्तप्रकारेण पत्राणि कोष्टकागारमध्ये मुक्त्वा प्राच्यप्रतीच्यसौम्ययाम्यया च रेखया पूर्वादयश्चतस्रो दिशः साध्याः । ततो यंत्रस्य पृष्ठदेशे आयतां भुजां कृत्वा तदग्रे द्वे सूक्ष्मे च तयास्या भुजाया मध्ये छिद्रं च कृत्वा तस्य छिद्रस्याग्रे पश्चाच्च सच्छिद्रचतुष्कोणे यंत्रनेत्रे निवेश्य । छिद्रे भुजामध्यविवरे च मेरुसंज्ञं कीलकं च क्षिप्त्वा तेन मेरुकीलेन कोष्टकागारसहितां पत्रावलीं च विध्याग्र मेरुकीले घोटिकावक्राकारा कीलिका क्षेप्या ॥

कृत्वा छिद्रं सूक्ष्ममस्य त्रिकोणे तत्र क्षिप्त्वा कंटकं वृश्चिकाभम् ॥
तस्य प्रांते मुद्रिकां लंबिकाख्यं सूत्रं देयं यंत्रनिष्पत्तिरेवम् ॥६॥

अस्य व्याख्या ॥ अस्य यंत्रस्य त्रिकोणे किरीटसंज्ञे सूक्ष्मं छिद्रं कृत्वा तत्र वृश्चिकमुखाभं कंटकं क्षिप्त्वा तत्प्रांते मुद्रां च दत्वा मुद्राप्रांते लंबिकाख्यं सूत्रं देयम् । एवं यंत्रनिष्पत्तिर्ज्ञेया ॥

अभूद्भृगुपुरे वरे गणकचक्रचूडामणिः
कृती नृपतिसंस्तुतो मदनसूरिनामा गुरुः ॥
तदीयपदशालिना विरचिते सुयंत्रागमे
महेन्द्रगुरुणोदितं घटनकर्म यंत्रस्य तु ॥ ७ ॥

स्पष्टोऽर्थः ॥

श्रीपीरोजशकेन्द्रसर्वगणकैः श्लिष्टो महेन्द्रप्रभुः
जातः सूरिवरस्तदीयचरणांभोजैकभृंगद्युता ॥
सूरिश्रीमलयेन्दुना विरचितेऽस्मिन् यंत्रराजागमे
व्याख्याने विशदे सुयंत्रघटनाध्यायो द्वितीयो गतः ॥ १ ॥
इति श्रीयंत्रराजागमे यंत्रघटनाध्यायो द्वितीयः ॥ २ ॥

---

तृतीयोऽध्यायः ॥

अथ यंत्ररचनाध्यायो व्याख्यायते—

यंत्रं प्रोक्तं षड्विधं ह्यानयत्या
एक १ द्वि २ त्री ३ पं ५ ग ६ पंचयंश १० कृत्या ॥

द्वेधाप्येतत्सौम्ययाम्यप्रभेदात्
तन्मिश्रत्वे मिश्रसंज्ञं परं च ॥ १ ॥

व्याख्या ॥ आनयते ९० रेक १ द्वि २ त्रि ३ पंच ५ पट् ६ दशो १० मतांशपरिकल्पनया यंत्रं षड्विधं प्रोक्तम् ॥ चतुर्भिरंशैर्भजनाभवतेर्भजनं न भवतीति नोक्तम् ॥ एतदेव सौम्ययाम्यप्रभेदाद् द्वेधा स्यात् । एतन्मिश्रत्वे मिश्रसंज्ञं परं च यंत्रं प्रोक्तम् ॥

वृत्तद्वयं कर्कटकेन पृष्टे यंत्रस्य निर्माय चतुर्दिशोंऽक्याः ॥
प्राग्याम्यगाः कोष्टगतास्ततश्च स्थाप्याः खनंद९०प्रमितोन्नतांशाः २

व्याख्या ॥ पूर्वोक्तयुक्त्या घटितयंत्रस्य कोष्टकागारस्य पाश्चात्यविभागे कर्कटकाख्येन लोहयंत्रेण वृत्तद्वयमुपरितनं महदधस्तनं च लघु विधाय पूर्वाद्याश्चतस्रोऽपि दिशो रेखाद्वयेनांक्याः । तत्र पूर्वस्मिन् वृत्ते पूर्वदक्षिणदिङ्मध्यगताः केन्द्राभिमुखाः कोष्टगता नवतिप्रमिता उन्नतांशाः ईप्सितैरेकाद्यंकैः स्थाप्याः ॥

अथ द्वितीयवृत्तस्य लेखमाह—

वृत्ते द्वितीये लिखितोन्नतांशा रेखा विलेख्याः प्रतिभागजाताः ॥
पक्षत्रयेऽपक्रमजाविभागाः शंकुप्रभाप्रागदिता तथा ज्या ॥ ३ ॥

व्याख्या ॥ अधस्तनवृत्ते उपरितनलिखितानामुन्नतांशानामंकानुसारेण प्रतिभागजाता रेखा विलेख्याः । ततो दक्षिणपश्चिमांतराले अपक्रमभागा लेख्याः । तथा पश्चिमसौम्यांतराले वृत्तमध्ये ससांगुलच्छायां लिखित्वा तदधस्तादुभयतः पश्चिमसौम्यरेखाक्रमान् द्वादशकोष्टकान् कृत्वा पश्चिमोत्तररेखातो मध्यं यावदेकादि द्वादशपर्यंतान् द्वादश द्वादशांकान् विलिख्य तेषामधस्तात् प्रतिभागजाता ज्यंगुलाप्रा रेखा विलेख्याः ॥ तत उत्तरपूर्वांतराले कोष्टकेषु जीवांका विलेख्याः ॥ चतुर्णां भागानां रेखाश्च केंद्रसन्मुखा एव कार्याः ॥ कदाचिद्यंत्रे शंकुद्वयस्यापि छाया विलिखिता न भवति तदा टीकायां द्रष्टव्याः ॥ एवं यंत्रस्य पृष्ठभागसाधनं संपूर्णं जातम् ॥

अथ यंत्रे कोष्टकागारस्य पूर्वपक्षसाधनमाह—

वृत्तत्रये पालिगते कृते प्रा-
ग्वृत्तेकिरीटांतरतो यदीश्च ॥
अंशानभीष्टान् खरसाग्नि ३६० संख्यान्
रेखास्तदीयास्तदधो विलेख्याः ॥ ४ ॥

व्याख्या ॥ यंत्रकोष्टकागारस्य पूर्वभागे पाल्यां कर्कटाग्रेण वृत्तत्रये कृते सति

प्रथमे नाड्याख्यवृत्ते किरीटमध्यात् सूक्ष्मा घटिका विलेख्याः ॥ तदधश्चिकोर्पित एकाद्युन्नतांशानुसारेण कोष्टकान् विधाय चतुर्दिक्षु नवति ९० नवतिरंशा ईप्सितांशकैर्लेख्याः । उपरितनस्य वृत्तस्य नाडीरूपत्वात् तदधःस्थितद्वितीये वृत्ते पलरूपा रेखाः प्रतिकोष्टं यथोचितं लेख्याः ॥

अथ सौम्ययंत्रे इष्टाक्षांशपत्रेपून्नतवलयानां साधनमाह—

यंत्रे च सौम्ये विरचय्य कंबां पत्रानुमानेन विलिख्य तत्र ॥
भागान् खरामान् ३० रचयेत्तदंशैः कर्कादिवृत्तत्रितयं दलेषु ५

अस्य व्याख्या ॥ सौम्ये यंत्रेऽक्षांशपत्राणि काष्ठमयफलके लाक्षया दृढं संनिवेश्य पत्रानुमानेनैकां कंबां विधाय तत्र त्रिंशदंशान् परिकल्प्य कंबास्थितैरंशैः कर्कप्रमाणेन १२।५१ मेषतुलाप्रमाणेन १९।३८ मकरप्रमाणेन च ३० यंत्रमध्यात् कर्कटयंत्रेण वृत्तत्रयमालिखेत् ॥

दिगंकितेष्वेषु च मध्यकेंद्राद्याम्यरेखोपरि केंद्रमानैः ॥
चिह्ने कृते तच्छिरसः पृथुत्वमानेन वृत्तानि लिखेत्स्फुटानि ६

अस्य व्याख्या ॥ ततः पूर्वादिदिगंकितेषु पत्रेषु याम्यरेखोपरि केंद्रहेतवे च. त्रिंशदधिकांशस्थापनार्थं ताम्रमयीं पट्टिकां विन्यस्य मध्यकेंद्राद्याम्योपरि दक्षिणोपरि एकद्व्यादीनामंशानां प्रत्येकं केंद्रमानैः कर्कटकेन चिह्ने कृते तच्छिरसस्तन्मूर्द्धतः पृथुत्वस्य व्यासस्य मानेन स्फुटानि वृत्तानि लिखेत् ॥

भुजाख्यमाद्यं भवतीह वृत्तं ततः परं चोन्नतमंडलानि ॥
तेषां लिखेदानवतेर्विभागान् शुद्धानिनाद्युन्नतताऽवगत्यै ॥ ७ ॥

व्याख्या ॥ एतेषु प्रथमं वृत्तं भुजाख्यं शेषाण्युन्नतांशानां वृत्तानि भवंतीति शेषः । एषु च वृत्तेषु पूर्वोक्तकटकाद्यंककल्पनया आनवतेर्विभागानुन्नतांशान् लिखेत् । किमर्थं इत्यत्र सूर्यस्यादित्यादारभ्योन्नतांशानां महाशी धिष्ण्यानामुन्नतावगत्यै सूर्योन्नतावगमनायेत्यर्थः ॥

मध्याह्नरेखामभितोऽस्य कर्कवृत्तस्थिते प्रागपरे विभागे ॥
क्रमाल्लिखेन्नां परमं दिनं तद्देशाभिधानेन तथाक्षभागान् ॥ ८ ॥

व्याख्या ॥ मध्याह्नरेखामभित उदयतः कर्कवृत्तमध्यस्थिते प्रागपरे विभागे क्रमान्नां विषुवच्छायां परमं दिनं अक्षरदिनमानं च देशनामभाक्षांशांश्च लिखेत् स्पष्टमेदित्यर्थः ॥

यंत्र० ८

अथ सौम्ययंत्रे होरास्थापनमाह—

कुजादधो द्वादशधा विभज्य मृगादिकर्काह्वयमंडलेषु ॥
विधाय वृत्तान्यभितः प्रतीच्या अंकैर्निवेश्या द्विदशापि होराः ९

अस्य व्याख्या ॥ कुजादपरक्षितिजात् पूर्वक्षितिजाधाधस्तान्मकरमेषकर्काह्वयमंडलेषु द्वादशधा विभज्य स्वबुद्ध्या कर्कटेन वृत्तत्रयस्पर्शपूर्वं अभितः पूर्वापरविभागे वृत्तानि विधाय प्रतीच्याः पश्चिमादिग्विभागादेकादिभिर्द्वादशपर्यंतैरंकैर्दिनराम्योद्वादश अपि होराः स्थाप्याः । एवं सौम्ययंत्रेऽक्षांशपत्रसाधना ॥

अथ सौम्ययंत्रे भचक्रपत्रे कर्कादिवृत्तत्रयसाधनम् । भचक्रकेंद्रप्रमाणेन भमंडलसाधनं यत्र निरक्षमेषादिलग्नानामिष्टभागानां स्थापनमाह—

भचक्रपत्रेऽपि पुरैव क्लृप्ते वृत्तत्रयेऽभ्यंतरतोऽष्टभागान् ॥
हित्वा कलाश्चाब्धिगुणा न याच्ये व्यासार्धमानेन विधाय वृत्ते १०
निरक्षमेषादिविलग्नमानात् पूर्वोदितास्प्राचि निवेश्य चैद्याः ॥
वृत्ते द्वितीये तदधो निवेश्यास्तदंकसंख्यागणकैर्निजेष्टाः ॥ ११ ॥

अनयोर्व्याख्या ॥ कोष्टकागारपत्रस्योपरि दृढतया स्थापिते भचक्रपत्रेऽपि पूर्ववद्विषसाधना । एवं कर्कमेषमकरप्रमाणेन वृत्तत्रये रचिते सति अभ्यंतरतो यंत्रमध्यात् याम्यभागे रेखोपरि भचक्रकेंद्रप्रमाणं ८।३४ मुक्त्वा तदंतस्ते व्यासार्धमानेन २१।२६ वृत्तं विधाय तदधो लग्नांशरेखास्थापनार्थं द्वितीयं वृत्तं विधाय पूर्वस्मिन् वृत्ते पूर्वोदितान् निरक्षमेषादिलग्नमानांतश २७।५० कला इत्यादिरूपानैद्याः पूर्वभागान्निवेश्य तदधःस्थिते द्वितीयवृत्ते निजेष्टाः पूर्वोक्तयुक्त्या पश्चिमयंत्रोचिता एकाद्यास्तदंतरेखाः क्रमान्निवेश्याः ॥

मेषादीनामंशादिमानं यथा—

मेषे भागा कलाश्चापि धिष्ण्यानि गगनेषवः २७।५० ॥
वृषे नंददृशोऽब्ध्यक्षा २९।५४ युग्मे दंताः षडिंदवः३२।१६ ॥१२॥
व्युत्क्रमादेत एव स्युः कर्कसिंहकनीष्वपि ॥
कन्यादिषट्कमानं स्यात्तुलादौ वैपरीत्यतः ॥ १३ ॥

अथ भचक्रे प्रागुक्तकक्षमेसंकृतनक्षत्रस्थापनमाह—

व्यासाख्यवृत्तेऽजमुखानि संति लग्नानि लंकोदयजानि यत्र ॥
रेखा ह्युडूनां प्रतिभागजातास्तत्रैव केंद्राभिमुखा विलेख्याः ॥१४॥

केंद्रात्प्रतीपं विरचय्य चिह्नं द्युज्याप्रमाणेन च कर्कटेन ॥
तत्रैव धिष्ण्यस्य यथोदितस्य निवेश्यमस्याग्रमतीव सूक्ष्मम् ॥१५॥

अनयोर्व्याख्या ॥ यंत्रव्यासवृत्ते पूर्ववत् उत्तरस्यां दिशि निरक्षाणि मेषादिलग्नानि सांशानि लिखितानि संति । तत्र पूर्वरेखामनुलक्षीकृत्य नक्षत्राणामंशप्रमाणेन केंद्राभिमुखा रेखा विलिख्य केंद्रात्प्रतीपं सौम्यस्वाहोरात्रप्रमाणेन कर्कटकाग्रेण चिह्नं विरचय्य तत्रैव चिह्नोपरि यथोद्दिष्टस्य धिष्ण्यस्य नामसहितस्यातिसूक्ष्माग्रं मुखं स्थाप्यम् ॥

धनुर्मृगांतर्निशितं विधेयं चिह्नं प्रसिद्धं मकरास्यनाम्ना ॥
यच्चाग्न्यसाणं गणकेन विष्वक्षुहुर्मुहुश्चुंवति नाडिवृत्तम् ॥ १६ ॥

स्पष्टम् ॥ एवं सौम्ययंत्रे भचक्रसाधनं संपूर्णम् ॥

अथ केवलयाम्ययंत्रेऽक्षांशपत्रेपूत्रतांशवलयसाधनमाह—

याम्येऽपि यंत्रे विधिरुक्त एव व्यत्यस्य वृत्ते मृगकर्कसंज्ञे ॥
दिक्साधनापूर्वकमुन्नतांशान् याम्ये च भागे विनिवेशयेत ॥१७॥
मध्याच्च सौम्ये विरचय्य केंद्रं व्यासार्धमानेन कुजं विदध्यात् ॥
आभार्धकं दक्षिणतस्ततश्च केंद्राणि विस्तारयुतानि कुर्यात् ॥१८॥

व्याख्या ॥ याम्येऽपि यंत्रे विधिर्वृत्तसाधनादिः प्रागुक्त एव । अयं विशेषः । मृगकर्कवृत्ते व्यत्यस्य मृगवृत्तस्थाने कर्कवृत्तमिति नाम, कर्कवृत्तस्थाने मृगवृत्तनाम कृत्वा, दिक्साधनापूर्वमुन्नतांशान् दक्षिणस्यां दिशि निवेशयेत् स्थापयेदित्यर्थः । तथा यंत्रमध्यादुत्तरस्यां दिशि प्रोक्तयाम्यकेंद्रमानेन कर्कटेन चिह्नं कृत्वा, उक्तयाम्यव्यासार्धमानेन कुजवृत्तं विधीयते । एवं भार्धं यावत् मध्यात्सौम्यभागे केंद्राणि कृत्वा ततः केंद्रव्यासयोरग्रवृत्तानि संसाध्य, ततो भार्धाधिकत्वाद्दक्षिणस्यां सविस्तराणि केंद्राणि कुर्यात् । केंद्रमानैर्व्यासमानैश्चोन्नतवलयानि संसाधयेदिति भावः । एवं केवलयाम्ययंत्रे अक्षांशपत्रसाधना संपूर्णा जाता ॥

अथ केवलयाम्ययंत्रे भचक्रसाधना—

भचक्रपत्रेऽपि च याम्ययुक्त्या कृतेषु वृत्तेष्वपि केंद्रचिह्नात् ॥
व्यासाख्यवृत्ते विहिते कुबेरभागे निवेश्यानि पुरेव भानि ॥१९॥

अस्य व्याख्या ॥ भचक्रपत्रे याम्याक्षांशपत्रवदुक्तकर्कमकरवृत्तेषु [illegible] विहितेषु दिक्साधनापूर्वं यंत्रमध्यादुत्तरविभागे भचक्रकेंद्रमानेन [illegible] कृत्वा तदुपरि व्यासार्धवृत्ते २३।२६ विहिते पूर्वतो निरक्षाणि [illegible] मानि नक्षत्राणि च पुरेव सौम्ययंत्र इव, याम्यस्वाहोरात्रमानेन [illegible]

स्थाप्यानि । सौम्ययंत्रे सौम्यस्वाहोरात्रयुक्तानि लिख्यंते । अत्र तु याम्यस्वाहोरात्रयुक्तानीति भावः ॥

अथ मिश्रभेदेषु फणींद्रयंत्रेऽक्षांशपत्रे उन्नतवलयसाधनमाह—

तन्मिश्रभेदेषु फणींद्रयंत्रे वृत्तत्रयं सौम्यवदेव कार्यम् ॥
कर्कयततः खाग्निलवैर्विभज्य वृत्तद्वयं याम्यवदेव शेषम् ॥ २० ॥

व्याख्या ॥ तन्मिश्रभेदेषु सौम्ययाम्यात्मकयंत्रभेदेषु फणींद्रयंत्रे उन्नतांशपत्रे सौम्ययंत्र इव वृत्तत्रयं मकरमेषकर्काख्यं कार्यम् । ततः कर्कवृत्तमेव १२।५१ युक्ता स्थिरदृशैर्विभज्य याम्ययंत्र इव शेषं वृत्तद्वयं मेषमकराख्यं आमध्यं कार्यम् । एतावता मध्यात्क्रमेण वृत्तपंचकं मकरमेषकर्कमेषमकराख्यं समुत्पन्नम् । को भावः सौम्यध्रुवात् कर्क आसन्नः, मध्ये मेषः, बहिर्मकरः । ततः सौम्ययंत्रे कर्कवृत्तमादौ, तथा याम्यध्रुवान्मकरो निकटः । मेषो मध्ये । कर्कटो बहिः । ततो याम्ययंत्रे मकरवृत्तमादौ इदं तद् द्वयात्मकमिति तथैव वृत्तरचनोक्ता ॥

अथ फणींद्रयंत्रे अक्षांशपत्रे उन्नतवलयसाधनमाह—

कर्कस्य वृत्तादुपरि प्रसाध्य सौम्योक्तयुक्त्योन्नतमंडलानि ॥
याम्यानि कुर्यात्तदधः स्थितानि संजातशुद्धीनि हि याम्यभागे २१

व्याख्या ॥ अक्षांशपत्रे पूर्ववद्दिक्साधनं कृत्वा याम्यदिग्भागे कर्कवृत्तादुपरि मकरवृत्तपर्यंतं सौम्यद्वयोन्नतमंडलानि प्रसाध्य कर्कादधो याम्ययंत्र इव मिलितान्युन्नतमंडलानि कार्याणि । एषां केंद्रव्यासादिप्रक्रिया प्राग्वत् ॥ एवं फणींद्रयंत्रेऽक्षांशपत्रसाधना संपूर्णा जाता ॥

अथ फणींद्रयंत्रे भमंडलसाधनम्—

प्राग्वद्भचक्रेऽस्य सपंचवृत्ते मेषादिषट्कं विनिवेश्य सौम्ये ॥
याम्येऽल्पभागैर्विनिवेशनीयं प्राक्पश्चिमांते च तुलादिषट्कम् २२

व्याख्या ॥ अस्य फणींद्राख्यमिश्रयंत्रस्य भपत्रे भचक्रपत्रे प्राग्वदक्षांशपत्रवत् सपंचवृत्ते रचितपंचवृत्तके सौम्ययंत्रवन्मध्याद्याम्यरेखोपरि बृहत्केंद्रांशैः । ८।३४ सौम्यदिग्विभागे प्राक्पश्चिमलग्नरेखालग्नं व्यासवृत्तं विरचय्य मेषादिराशिषट्कं निवेश्य, ततो याम्ययंत्रवन्मध्यात् सौम्यरेखोपरि लघुकेंद्रांशैः ८।३४ याम्यदिग्भागे पश्चिमपूर्वरेखालग्नं व्यासवृत्तं विरचय्य तुलादिषट्कं निवेशनीयम् ॥

अथास्मिन्नेव पत्रे भमंडलांशैर्नक्षत्रस्थापनमाह—

सौम्यानि भानीह कुलीरबाह्ये लेख्यानि सौम्यद्युगणोदितानि ॥
याम्यानि चैतानि कुलीरमध्ये शेषाणि याम्यद्युगणोदितानि २३

व्याख्या ॥ इह पूर्वोदिते फणींद्रयंत्रे भचक्रपत्रे सौम्यानि यानि सौम्यघुगणोदितानि प्रोक्तसौम्यस्याहोरात्रान्वितानि कर्कवृत्ताद्याद्ये आमकरं सौम्ययंत्रवल्लेख्यानि ।

अथ भचक्रपत्रस्य घटनाशिक्षामाह—

आधारवृत्तं परिरक्षणीयं पत्रे भचक्रार्धमपास्य शेषम् ॥
फणींद्रयंत्रं गदितं मयैतत् ज्ञेयानि यंत्राण्यखिलान्यपीत्थम् २४

व्याख्या ॥ भचक्रपत्रे शेषं पत्रमपास्य हित्वा राशिनक्षत्रस्थितिहेतोराधारवृत्तं परिरक्षणीयम् । शेषं स्पष्टम् । एवं फणींद्रयंत्रे भचक्रसाधना संपूर्णा जाता ॥

अथ किमपि प्रस्तुतं सविशेषमाह—

कैंद्रव्यासेभ्यो यानि उन्नतवलयानि संपादितानि संति तानि केवलसौम्ये केवलयाम्ये मिश्रे च सर्वदा याम्यभागे एव भवंति । तथा केवलयाम्ययंत्रादपि सौम्ययंत्रवद्घटिकादिकालनियमोऽक्षोद्दिष्टभूभागस्थानेषु सर्वदा सौम्यदिग्भागे तुल्यसेवायाति । परं यंत्रविज्ञैर्लंकाभिधनिरक्षस्थानादुत्तरध्रुवाभिमुखं ह्रस्वकेंद्रव्यासेभ्यः साधितसौम्योन्नतवलयैः सौम्यनक्षत्रसहितैः सौम्ययंत्रसाधनाचक्रे याम्ययंत्रसाधना तथाभिधा न कारिता । तत्र को हेतुः । यतो याम्यकेंद्रव्यासैर्दीर्घतरैर्याम्योन्नतमंडलानि भृशं दुर्घटानि पृथुलप्रमाणत्वाद्बहुविस्तराणि । अतएव साधितुमशक्यानि । राशिसंधीनि नक्षत्राण्यपि लोकांतराणि निरुपयोगीनि च । अतस्तैस्तत्रांगीचक्रे । अतस्तद्याम्ययंत्रं विहाय सौम्ययंत्रांगीकारः कृतः । लंकात उत्तरध्रुवाभिमुखं परमक्रांतिपर्यंतं अस्मादेव सौम्ययंत्राद्घटिकादिकालनिर्णयः सुखोपलभ्यः सुखावबोधश्च प्रमाणीकृतः । तथा तैरेव गणकाचार्यवर्यैर्गणितज्ञानकौतुकार्थं सौम्ययाम्योभयेन गणितागमेन उभयोः सौम्ययाम्यगणितयोर्युक्त्याऽनेकानि मिश्रयंत्राणि तथा चक्रिरे यथायथानयोः सौम्ययाम्ययंत्रयोः सौम्ययाम्यविभागे स्वस्वाक्षस्थाने घटिकादिसमयज्ञानमेभ्यो मिश्रयंत्रेभ्य एव सर्वदा सत्वरमायाति । विशेषश्चायम् । यतः फणींद्राभिधे मिश्रयंत्रे वृत्तपंचकत्वात्सौम्ययाम्योभयेन गणितागतेन उन्नतमंडलैर्वृत्तसंपाते शुद्धिः स्यात् । परमन्येषु वृत्तत्रयत्वाद्येनैव गणितागतेन उन्नतमंडलानि पृथक् पृथग्जायंते । अतस्तेषु संपातशुद्धिर्नसंजायतीति ॥

अथाक्षांशेभ्यः परमदिनानयनम्—

द्विष्टाक्षांशा जिनैर्भक्ता लब्धमक्षाद्विशोधितम् ॥
शेषमर्धं हृतं दिग्भिः पश्चात्तं द्विगुणीकृतम् ॥ २५ ॥
तन्नाडिका विनाड्यादि ऊर्ध्वांकं त्रिंशतायुतम् ॥
नृयुग्मांते रवौ प्रोक्तं पलेभ्यः परमं दिनम् ॥ २६ ॥

व्याख्योदाहरणमेव—

तद्यथा ॥ दिल्यामक्षांशाः २८।३९ द्विस्थाः २८।३९ चतुर्विंशत्या भक्ता लब्धं १।११।३८ अक्षांशात्पात्यते । शेपं २७।२७।२२ अर्धितं १३।४३।४१ दशगुणं १३७।१७ पष्ट्याप्तं २।१७।१७ द्विगुणं ४।३४।३४ उपरि त्रिंशद्भि ३० र्युतं जातं दिल्यां परमदिनं ३४।३४।३४ एवमनया रीत्या त्रिंशदंशांशपर्यंतमायाति । अग्रेऽन्तरं करोति । एवं सर्वत्र ॥

अथ परमद्दिनाद्विपुवच्छायानयनम्—

हीनं खरामैः परमं दिनं च
शेपं नगघ्नं गुणितं च पष्ट्या ६० ॥
भक्तं त्रिगोबाहुभि २९३ रंगुलादि-
च्छाया स्फुटा स्याद्विपुवद्भवस्य ॥ २७ ॥

अत्रोदाहरणमेव व्याख्या ॥ अथात्र परमदिनं ३४।३४।३४ विपुवद्दिनमानेन ३० हीनं ४।३४।३४ सप्तगुणं ३२।१।५८ कलापिंडः १९२१।५८ कल्पित २९३ भागहाराप्तं विपुवच्छाया ६।३३ कलापिंडशेपं १६६ अनया युक्त्या छायानयनं कार्यम् ॥

अभूद्भृगुपुरे वरे गणकचक्रचूडामणिः
कृती नृपतिसंस्तुतो मदनसूरिनामा गुरुः ॥
तदीयपदशालिना विरचिते सुयंत्रागमे
महेन्द्रगुरुणोद्धृते रचनकर्मजातं स्फुटम् ॥ २८ ॥

स्पष्टार्थः ॥

श्रीपीरोजमहेन्द्रसर्वगणकैः पूज्यो महेन्द्रप्रभु-
र्जीवः सूरिवरस्तदीयचरणांभोजैकभृंगप्रभुता ॥
सूरिश्रीमलयेन्दुना विरचिते श्रीयन्त्रराजागमे
व्याख्याने रचनाभिधेऽस्तिविशदोऽध्यायतृतीयोगतः ॥ ३ ॥
इति श्रीयन्त्रराजागमे यंत्ररचनाध्यायस्तृतीय ॥ ३ ॥

---

चतुर्थोऽध्यायः ।

अथ यंत्रशोधनाध्यायो व्याख्यायते—

निष्पन्नयंत्रमुल्लंव्य रंध्रे कीलं प्रवेशयेत् ॥
तदग्रे लंबयेत्सूत्रं सूक्ष्मं भारेण संयुतम् ॥ १ ॥
मध्यरेखां स्पृशेच्चेत् ज्ञेयं शुद्धं तथाहि तत् ॥
अन्यथाधिकमस्यांगं घर्षित्वा शोधयेत्ततः ॥ २ ॥

अनयोर्व्याख्या ॥ निष्पन्नयंत्रमुत्थुंब्य तत्किरीटच्छिद्रे लोहमयं कीलं प्रवेशयेत्। तदग्रेऽधोभारेण युतं सूत्रं सूक्ष्मं लंबयेत्। सूक्ष्मं लंबमानं कुर्यादित्यर्थः। तल्लंबमानं सूत्रं चेद्यंत्रस्य मध्ये रेखामात्रं स्पृशेत्तदा तद्यंत्रं शुद्धं, समं ततो भारशुद्धं ज्ञेयमित्यर्थः। अन्यथा अशुद्धं यदि स्यात्तदाऽस्य यंत्रस्य वामं दक्षिणं वाधिकमंगं घर्षयित्वा पुनः शोधयेत्। सूत्रस्पर्शेनेति शेषः॥

अथ कुजादिवृत्तानां शोधनमाह—

मेषद्युजीवाप्राग्रेखायोगस्पर्शात्कुजे स्फुटे ॥
केंद्रव्यासांतरैः शुद्धैः शोधयेदुन्नतांशकान् ॥ ३ ॥

व्याख्या ॥ मेषद्युजीवाप्राग्रेखयोर्योगे संनिपाते उभयतस्तयोः स्पर्शात् उन्नतकुजाख्यवृत्ते स्फुटे भवतः। तथा पूर्वोक्तैः केंद्रव्यासांतरैरुन्नतांशान् अर्थादुन्नतांशवृत्तानि शोधयेत्॥ शुद्धानि कुर्यादित्यर्थः॥

उदाहरणम्—तद्यथा। मध्यात् षडुन्नतांशानां केंद्रप्रमाणेन २०१३२ चिह्नं कृत्वा तदुपरि व्यासमानेन ६६।२८ वृत्ते कृते षडुन्नतांशानां वलयं निष्पन्नं। ततो यंत्रमध्यात् मध्याह्नरेखोपरि उन्नतवलयं यावत् केंद्रव्यासांतरं ३।७ कलाभागैः प्रमीयमानं यदि स्यात्तदा तद्वलयं शुद्धम्। एवं शेषाण्युन्नतवलयानि शोध्यानि॥

अथ सांशानां द्वादशलग्नानां शोधनमाह—

उदयास्तोदीच्ययाम्यरेखाग्रे सदृशांशता ॥
प्राक् सप्ततुर्यदिक्संख्यलग्नानां स्याद्विशुद्धता ॥ ४ ॥

व्याख्या ॥ उदये पूर्वक्षितिजे, अस्ते पश्चिमक्षितिजे उदीच्यरेखाग्रे याम्यरेखाग्रे च प्रथमसप्तमचतुर्थदशमानां मेषतुलाकर्कमकराणां सदृशांशता तुल्यांशता यदि स्यात्तदा तेषां चतुर्णां लग्नानां शुद्धता ज्ञेया। तद्वैपरीत्येऽशुद्धता च। एवं शेषाण्यपि लग्नानि अंशैः शोधनीयानि॥

अथ इक्कर्मशुद्धस्थापितनक्षत्रांशान् परमोन्नतांशैर्नक्षत्रचंचुशोधनमाह—

मध्यरेखास्थिते स्वस्वराश्यंशे संस्पृशेद्यदि ॥
भास्यं स्वान्परमानंशान् तदा तच्चंचुशुद्धता ॥ ५ ॥

व्याख्या ॥ यन्नक्षत्रं यस्य यस्य राशेर्यस्मिन्यस्मिन्नंशेऽस्ति तस्मिन् तस्मिन् भागे मध्यरेखोपरि स्थिते सति तस्य तस्य नक्षत्रस्याख्यं चंचुस्थानं स्वान्परमोन्नतांशान् यदि स्पृशति तदा तस्य नक्षत्रस्याऽऽस्यशुद्धिः स्यात्। तदभावे चंचोर्हानिर्वृद्धिर्वा कार्येति शेषः। यथा शुद्धं रोहिणीनक्षत्रं मिथुनस्य तृतीयांशे भवतीते। तस्मिन्नंशे मध्यरेखोपरि स्थापिते यदि रोहिण्यास्यं स्वीयान्परमोन्नतांशान् ७० स्पृशति तदा रोहिण्या आस्यशुद्धिर्भवति। एवं शेषाण्यपि नक्षत्रास्यानि शोधनीयानि॥

अथ यंत्रपृष्ठस्थितभुजाशोधनं पादद्वयशोधनं चाह—

भुजाग्रयुग्मं शुद्धं स्याद्रेखास्थं परपूर्वयोः ॥
तन्मध्यरेखोपरिगं शुद्धं पादद्वयं तथा ॥ ६ ॥

व्याख्या ॥ यंत्रपृष्ठे भुजाग्रयुग्मं पूर्वापररेखोपरिगं यदा स्यात्तदा भुजाग्रं शुद्धम् । तथा पादद्वयं तस्याभुजाया मध्यरेखोपरिस्थितं शुद्धं भवति ॥

अभूद्भृगुपुरे वरे गणकचक्रचूडामणिः
कृती नृपतिसंस्तुतो मदनसूरिनामा गुरुः ॥
तदीयपदशालिना विरचिते सुयंत्रागमे
महेंद्रगुरुणोद्धृतेऽजनि सुशोधनं यंत्रजम् ॥ ७ ॥

स्पष्टार्थः ॥

श्रीपीरोजदार्केंद्रसर्वगणकैः पृष्टो महेंद्रप्रभु-
र्जातः सूरिवरस्तदीयचरणांभोजैकभृंगप्रभुता ॥
सूरिश्रीमलयेंदुना विरचितेश्रीयंत्रराजागमे
व्याख्याने स्फुटशोधनादिकथनाध्यायश्चतुर्थोऽभवत् ॥ ४ ॥
इति श्रीयंत्रराजागमे यंत्रशोधनाऽध्यायश्चतुर्थः ॥ ४ ॥

---

पंचमोऽध्यायः ।

अथ यंत्रविचारणाध्यायो व्याक्रियते—

अथ रवेः शेषग्रहाणां नक्षत्राणां चोन्नतांशानयनमाह—

करेऽपसव्ये विनिवेश्य यंत्रं ज्योतिर्विदा भास्करसन्मुखेन ॥
तथा भुजाग्रं परिचालनीयं यथा विशेच्छिद्रयुगेऽर्कतेजः ॥ १ ॥

अस्य व्याख्या ॥ अपसव्ये दक्षिणे तथाच्छिद्रयुगे इति भुजः पादसंबंधः । शेषं स्पष्टम् ॥

पूर्वेऽहनि प्राक्ककुभो भुजाग्रं स्पृष्टा रवेरुन्नतभागकाः स्युः ॥
त एव मध्यंदिनतोऽपरांशा रात्रौ ग्रहोडुष्वपि चैवमेव ॥ २ ॥

व्याख्या ॥ पूर्वेऽहनि पूर्वाह्णे प्राक्ककुभः पूर्वस्या दिशो भुजाग्रं स्पृष्टा एकाद्या नवतिपर्यंता रवेरुन्नतभागाः स्यु भवेयु । एवं मध्यंदिनतो मध्याह्नादूर्ध्वमपरोन्नतांशाः स्युः । तथा रात्रौ गणकेन दक्षिणनेत्रं निमील्य वामनेत्रोपरिस्थेन यंत्रेण दृष्टस्य इष्टग्रहस्य धिष्ण्यस्य वा वेधे भुजाग्रस्पृष्टा अंशाः पूर्वापरदिग्गतत्वेन पूर्वोन्नतांशा अपरोन्नतांशा ज्ञेयाः ॥

अथ रविसंबद्धपूर्वापरोन्नतांशेभ्यो दिनगतशेषघटिकानयनं लग्नानयनं चाह—

रव्यंशकं प्रागपरे च भूजे धृत्वोन्नतांशोपरिगे कृतेऽस्मिन् ॥
द्विस्थानसंलग्नमृगास्यमध्ये कालांशकैः पंक्ति १० पलप्रमाणैः ॥३॥
षड्भि ६ र्विभक्तैर्दिवसस्य यातं शेषं च घट्यादि परिस्फुटं स्यात् ॥
तथोन्नतांशस्पृशि भास्करांशे प्राग्भूजगः सायनलग्नभागः ॥ ४ ॥

अनयोर्व्याख्या ॥ इष्टदिने सायनमेषादिराशिस्थितसूर्यांशं पूर्वाह्णे प्राचि भूजे अपराह्णे अस्तभूजे च कृत्वाऽस्मिन्नेव सूर्यांशे क्रमाद्विद्धे च पूर्वापरोन्नतांशोपरिगे कृते सति क्रमाद्विस्थानसंलग्नमृगास्यमध्यस्थितैः कालांशकैर्दशपलप्रमाणैः षड्भि ६ र्भक्तैर्दिनस्यातीत घट्यादि परिस्फुटं स्यात् । तथा पूर्वोक्त एव भास्करांशे विद्धपूर्वापरोन्नतांशस्पृशि पूर्वक्षितिजगतः सायनमेषादिलग्नांशः स्पष्टः स्यात् ॥

अथ दिवाहोरानयनम्—

एवं रवेः सप्तमराशिभागो यत्रैव होरावलयेऽस्ति सैव ॥
होराद्युनाथाच्च ततः स्वषष्ठषष्ठस्य गण्यापरभूजवृत्तात् ॥ ५ ॥

एवमिति कोऽर्थः ॥ पूर्ववद्भास्करांशे इष्टोन्नतांशोपरि स्थापिते सति तस्माच्च सप्तमराश्यंशो यस्मिन् होरावलयेऽस्ति सैव तद्दिने आद्यादिनवारादिहोरा । ततो दिनवारहोरातः षष्टस्य द्वितीयाद्या द्वादशपर्यंता होरा ज्ञेया । आद्या दिनवारतो वारोपलक्षितग्रहस्य षष्ठषष्ठस्य द्वितीया । परमियमाज्ञायहोरापरभूजवृत्ताद् गण्या ॥

अथ दिनगतशेषघटीभ्यो रव्युन्नतांशानयनम्—

रव्यंशकं प्राक् क्षितिजे निवेश्य चिह्नं मृगास्ये विदधीत पश्चात् ॥
अभीष्टकाले घटिकोपरिस्थं तदेव कृत्वा परिचिंतनीयम् ॥ ६ ॥
रव्यंशको यत्र हि तुंगवृत्ते तदंकसंख्यास्तपनोन्नतांशाः ॥
मध्याह्नतोऽस्तक्षितिजात्तथैव ते बोधनीयाः सुधियाऽवशिष्टाः ७

अनयोर्व्याख्या ॥ रव्यंशकं प्राक्क्षितिजे निवेश्य मृगास्ये चिह्नं विरच्य पश्चादभीष्टकाले घटिकोपरिस्थं तदेवमृगास्यं कृत्वा गणकेन विलोकनीयम् । यस्मिन् तुंगवृत्ते रव्यंशः स्थितोऽस्ति तावदंकप्रमाणाः पूर्वतः सूर्योन्नतांशास्तावतीषु घटीषु जाता इति शेषः । तथा मध्याह्नतोऽस्तक्षितिजात्तथैव पूर्वोक्तरीत्या सुधिया विदुषा अवशिष्टास्विष्टघटीषु अवशिष्टा उन्नतांशा बोधनीयाः ॥

अथ रात्रौ विद्धनक्षत्रोन्नतांशेभ्यो रात्रिगतशेषघटिकानयनमाह—

विद्धोन्नतांशोपगते च भास्ये रव्यंशकेऽस्तेंद्रकुजस्थिते च ॥
चिह्नद्वयांतर्गतशेषनाडीपलानि पूर्वापररात्रिभागे ॥ ८ ॥

रात्रौ भुजाग्रेणेष्टनक्षत्रे विद्धे प्राच्याः प्रतीच्या वा ये उन्नतांशाः प्राप्यंते। तेषू-न्नतवलयस्थितेषु विद्धोन्नतांशेषु विद्धे नक्षत्रमुखे धृते, सूर्यांशे अस्तकुजस्थे ऐंद्रकुजस्थे वा पूर्वापररात्रिभागे क्रमान्मकरमुखचिह्नद्वयांतर्गतं शेषं नाडीपलादिस्फुटं स्यात् ॥

अथ रात्रौ लग्नहोरानयनमाह—

तत्रैव नक्षत्रमुखे निविष्टे प्राग्भूजगं सायनमेति लग्नम् ॥
सूर्यांशकाधिष्ठितवृत्तसंस्था तदात्र होरापि निशि स्फुटा स्यात् ९

व्याख्या ॥ तत्रैव विद्धोन्नतांशेष्वेव विद्धनक्षत्रमुखे निविष्टे पूर्वरात्रौ अपररात्रौ प्राग्भूजगं सायनं लग्नमेति। यदा तस्मिन् काले सूर्यांशकाधिष्ठितवृत्तसंस्था होरा निशि रात्रौ स्फुटा स्यात्। लग्नकाले यस्मिन् वलयेऽर्कः स्थितोऽस्ति तद्वलये तद्-वहोरा भवतीत्यर्थः ॥

अथ रात्रिगतेष्टघटीभ्यो नक्षत्राक्रांतोन्नतांशानयनम्—

सूर्यांशकेऽस्तक्षितिजस्थितेंऽकं कृत्वा मृगास्ये गतनाडिकासु ॥
निवेशितेऽत्रोन्नतवृत्तगाः स्वाः प्राच्यप्रतीच्योडुभवोन्नतांशाः १०

व्याख्या ॥ सूर्यांशकेऽस्तक्षितिजस्थिते सति मृगास्ये अंकं कृत्वा पश्चाद्गतेष्टना-डिकासु मृगास्ये निवेशिते सति उन्नतांशवृत्तस्थिताः स्वकीयाः प्राच्यप्रतीच्योडुभवाः पूर्वापरकपालस्थितनक्षत्राक्रांता उन्नतांशाः स्फुटा भवंतीति शेषः ॥

अथ दिनरात्रिगतघटीभ्यो लग्नानयनमाह—

प्रागस्तभूजोपगतेऽर्कभागेऽ-
किते मृगास्ये गतनाडिकासु ॥
स्थिते च तस्मिन् द्युनिशोः क्रमात्स्या-
त्प्राग्भूजगः सायनलग्नभागः ॥ ११ ॥

व्याख्या ॥ दिने सूर्यांशे प्राक्क्षितिजोपरी मृगास्ये चिह्निते ततो गतनाडि-कासु तस्मिन्मृगास्ये स्थिते सति प्राक्क्षितिजस्थः सायनो लग्नभागः स्यात् ॥ एवं रात्रावस्तक्षितिजस्थे सूर्यांशे मृगास्यं चिह्नयित्वा ततो रात्रिगतघटीषु मृगास्ये आरो-पिते प्राक्क्षितिजगतः सायनो लग्नभागो भवति ॥

अथ द्वादशभावसाधने भावचतुष्टयसाधनम्—

पूर्वास्तभूजोत्तरदक्षिणासु
प्राक् सप्त ७ तुर्या ४ वर १० लग्नभागाः ॥

लग्ने भवेत्केंद्रचतुष्कमिष्टे
यत्र स्थिताः स्युर्बलिनो ग्रहेंद्राः ॥ १२ ॥

व्याख्या ॥ इष्टे तात्कालिके लग्ने पूर्वभूजास्तभूजोत्तरदक्षिणासु समकालं संभवंतः प्राक्सप्ततुर्यांबरलग्नभागाः प्रथमसप्तमचतुर्थदशमलग्नांशाः केंद्रचतुष्कं भवेत्। यत्र केंद्रचतुष्के स्थिता ग्रहेंद्रा बलिनो भवेयुरिति ॥

पुनर्भावचतुष्टयोत्पादनमाह—

अंकेशहोरादिगते तु लग्ने खमध्यगौ नैधनधर्मभावौ ॥
द्वितुर्यहोरास्पृशि सप्तमांशे खमध्यगावेव शिवार्कसंख्यौ ॥ १३ ॥

व्याख्या ॥ लग्नभागे तात्कालिकलग्नांशे, अंके ९ श ११ होरायुजि, नवमैकादशहोरावलयाधभागस्थे सति खमध्यगौ याम्यरेखोपरि गतौ क्रमान्नैधनधर्मभावौ स्तः। तथा सप्तमांशेऽस्तस्थिते सप्तमलग्नांशे द्वितीयचतुर्थहोरामांतरेखास्पृशि पूर्ववत् खमध्यगावेव एकादशद्वादशभावौ भवतः ॥

अथैभ्यः शेषभावचतुष्टयोत्पादनमाह—

धंस्वादिभावा रसराशियुक्तान्निजान्निजास्सप्तमसप्तमाः स्युः ॥
संयोज्य भावद्वितयं समीपस्थितं तदर्धं विहितं च संधिः ॥१४॥

व्याख्या ॥ अष्टमनवमैकादशद्वादशभावानां राशिषट्कयोजनाद् द्वादशकपातेनाथ शेषा द्वितीयपंचमषष्ठभावा भवेयुः ॥ अथ संधेरानयनम् ॥ भावयोगदलं संधिरिति च वचनात्। द्वादशप्रथमयोर्योग एकत्रमेलनं पश्चाद्दलमर्धं प्रथमसंधिः। एवं प्रथमद्वितीयभावयोर्मेलनार्धकरणेन द्वितीयसंधिः। एवं द्वादशापि संधयः स्युः ॥

अथ भावफलम्—

पूर्णं च मिश्रं च फलं ग्रहेंद्रः समांशको यच्छति भावसंध्योः ॥
हीनाधिको वा कथितः स संधेरतीतगम्यात्मफलप्रदायी ॥ १५ ॥

व्याख्या ॥ भावसंध्योः समांशको ग्रहेंद्रः पूर्णं च मिश्रं च फलं प्रयच्छति। कोऽर्थः। भावसमांशको यो ग्रहः स संपूर्णं फलं संधिसमांशकश्च मिश्रफलं ददाति। तथा स एव ग्रहेंद्रः संधेर्हीनांशकः सन्नतीतभावस्य फलदायी। संधेरधिकांशकश्चेद्गतंत आगामिभावस्य फलदायी भवति ॥

अथ खेटस्य संधेः सकाशान्न्यूनाधिकस्य विंशोपकाद्यं फलानयनमाह—

न्यूनाधिकत्वे विधिरेष कार्यः खेटांशसंध्यंतरयातशेषे ॥
हत्वा नखैर्भावजसंधिजांशांतरेण भक्ते परिलभ्यंते यत् ॥ १६ ॥

तस्माद् द्विधा भावफलं ग्रहस्य प्रहीयमानं परिवर्धमानम् ॥
इदं तदा यच्छति च ग्रहेशो यदा भवेत्कालजवृत्तगश्च ॥ १७ ॥

अनयोरर्थोस्योदाहरणमेव । संधेः सकाशाद्ग्रहस्य न्यूनाधिकत्वे एष विधिः कार्यः । कोऽर्थः । पेटांशसंध्यंतरयोः पाते कृते यच्छेषं तदंशः २० विंशत्या २० संगुण्य भावजसंधिजांशांतरेण भक्ते यत्फलं लभ्यते तद्ग्रहस्य द्विधा हीयमानवर्द्धमानभावभेदात्मकफलं भवेत् । इदं फलं ग्रहेशस्तदा प्रयच्छति यदा कालवृत्तगो भवति ॥

अथ यंत्रेण षड्विंशत्कांशरेखोपरिगतमध्यस्थलग्नांतज्ञानमाह—

आद्यंतरेखे रसभागजाते धृत्वा कुजे प्राचि मृगेंकितेद्विः ॥
अंशान्द्विचिह्नांतरजान्विभज्य षड्विंविलब्धाश्च षडंशनीयाः ॥१८॥
ततोऽकतः प्राक्तनतोऽशकेषु स्पृष्ट्वा मृगास्ये निहितेऽनुधस्रम् ॥
प्राच्ये कुजे सूर्यलवः स्फुटं स्यात्खेटेषु खेटेष्वपि चेत्थमेव ॥१९॥

अनयोर्व्याख्या ॥ यंत्रस्य अमंडले रसभागजाते पदद्वयमितै आद्यंतरेखे प्राचि कुजे धृत्वा, मृगास्ये स्थानद्वयस्थे चिह्नद्वयं कृत्वा, तदंतरभागांशान् षड्विंभज्य लब्धांशाः षडंशनीयाः । मृगास्यचिह्नद्वयमध्ये षड्स्थाने स्थापनीयाः । षड्गुणाः कार्याः । ततः प्राक्तनात् मृगास्यचिह्नांतरस्थांशेषु मृगास्येऽनुधस्रं निहिते सति प्राक्कुजे सौरो लवः स्फुटो भवति । इत्थमन्येष्वपि खेटेषु चिंतनीयम् ॥

अथ षड्भस्योन्नतवृत्तमध्यगतोन्नतांशस्थानज्ञानार्थमाह—

षड्भनतांशेषु मुखे तथांऽते रव्यंशमध्यास्य मृगेऽकिते द्विः ॥
षड्भिर्द्विचिह्नस्थलवान्विभज्य लब्धेषु भागेषु कृतेषु षोढा ॥ २० ॥
पूर्वोक्तरीत्यांशधृते मृगास्ये भत्युन्नतांशं रविभागयोग्यम् ॥
स्थानं भवत्युन्नतभागकानामेवं विधेयं निशि धान्यमानाम् २१

अनयोर्व्याख्या ॥ भत्रांशतषड्भेषु षड्भनतांशेष्वग्रावंते च सूर्यांशं निवेश्य एतेऽभ्यास्य, मृगास्ये स्थानद्वयोपरि चिह्निते सति तदंतस्थानांशान् षड्भि ■ विभज्य लब्धांशेषु षोढा स्थापितेषु प्रागुक्तरीत्या मृगमुखेंऽशेषु स्थापितेषु भत्युन्नतांशं रव्यंशयोग्यमुन्नतांशानां स्थानं भवति ॥ एवमन्येषामपि भानामुन्नतांशाः गमनीयाः । कोऽर्थः । यथा रव्यंशस्य उन्नतांशज्ञानमुक्तं तथा नक्षत्रसंघस्याप्युन्नतांशज्ञानम् ॥

अथ रात्रेर्यामचतुष्टयलग्ननक्षत्रोन्नतांशानयनमाह—

तृतीयहोरांतगतेऽर्कभागे यामोऽग्रिमः प्राक्कुजगं विलग्नम् ॥
रात्रौभवेदुन्नतवृत्तमध्ये धिष्ण्याग्रतश्चोन्नतभागकाः स्युः ॥ २२ ॥
एवं षडंकांतिमहोरिकासु प्रांतेऽर्कभागे परिशेषयामाः ॥
लग्नानिधिष्ण्योन्नतभागकाश्च विवेचनीया गणकैः स्वबुद्ध्या ॥ २३ ॥

अनयोर्व्याख्या ॥ अथ रात्रावस्तकुजेऽर्कभागं निवेश्य मकरमुखे चिह्नं कृत्वा अक्ष-पत्रस्थहोरावलयानां मध्ये तृतीयहोरामांतेऽर्कभागे स्थापिते पुनर्मृगास्ये चिह्निते चिह्नद्वयांतराले कालवृत्ते घटीपलात्मकः प्रथमो यामो भवति ॥ तथैव समकालं प्राक्कुजे लग्नं भागाद्यं स्यात् ॥ उन्नतवलयमध्ये धिष्ण्यचंचवास्थगता उन्नतभागा अपि स्युः । एवं षष्ठनवमद्वादशहोरामांते रव्यंशे क्रमेण स्थापिते शेषयामत्रयं लग्नानि नक्षत्रागामुन्नतभागाश्च गणकैः स्वधिया विचार्याः ॥

अथ रविस्पष्टीकरणमाह—

मध्यंदिनांशाँस्तपनस्य विध्वा ते मध्यरेखोपरि चिह्नीयाः ॥
सम्यक्तदूर्ध्वस्थितभांशको यः स सायनार्कस्य सदा स्फुटः स्यात् २४

व्याख्या ॥ रवेर्मध्याह्नसंबंधिन उन्नतांशान् यंत्रेण विध्वा मध्याह्नरेखोपरि तत्प्रमितोन्नतांशेषु चिह्ने कृते भचक्रे भ्राम्यमाणे यो राशिभागस्तत्र निविशति तस्मिन् दिने तदंशः सायनार्कस्य स्फुटो भवति ॥ अत्रोदाहरणम्—इष्टदिने मध्याह्नसमये यंत्रेण मध्याह्नस्योन्नतांशा- भागाः ६० तत्र मध्याह्नरेखोपरि चिह्ने कृते तदनु चक्रे भ्राम्यमाणे तदुपरि मेषराशिद्वादशांशः सायनो लग्न । अतो ह्यावमिष्टदिने रविर्मेषद्वादशभागे सायनो वर्तते । अयनांशैर्विहीनो निरयनो भवति ॥

अथ धिष्ण्यशेषग्रहाणां स्फुटीकरणमाह—

रात्रौ खमध्यस्थितभग्रहाणां
परोन्नतांशव्यधचिह्नितानाम् ।
मध्यस्थरेखोपरि भांशका ये
तत्र स्थितास्ते निखिलाः स्फुटाः स्युः ॥ २५ ॥

रात्रिसमये आकाशमध्यस्थितनक्षत्रग्रहाणां परमोन्नतांशान् यंत्रे विध्वा उन्नत-वलये तत्प्रमितांशेषु मध्यरेखोपरि चिह्नितेषु भचक्रे भ्रमिते नक्षत्रचक्रे स्थापिते, नक्षत्रराश्यंशे च स्थापिते ग्रहांशाः स्फुटा भवंति ॥ अत्रोदाहरणं स्फुटीकरणविधि ज्ञेयम् ॥

अथ प्रकारांतरेणेष्टकाले नक्षत्रोन्नतांशेभ्यो भौमादिपंचस्पष्टीकरणम्—

**रात्रावभीष्टग्रहऋक्षयोश्च ज्ञात्वोन्नतांशान्निजभागसंस्थे ॥**
**भास्ये ग्रहांशोन्नतभागभांशः स्फुटो भवेत्तस्य तदा खगस्य ॥२६॥**

व्याख्या ॥ रजन्यामिष्टग्रहस्येष्टनक्षत्रस्योन्नतांशान् ज्ञात्वा भमुखे निजोन्नतांशेषु स्थापिते सति, लब्धेषु पूर्वापरकपालस्थितग्रहोन्नतांशेषु यो राशिभाग उपविशति तत्र ग्रहः सायनः स्फुटो भवति ॥

अत्रोदाहरणम्—संवत् १९३५ प्रथमज्येष्ठशुक्लपंचदशी १५ गुरौ रात्रिगतघट्यः ६ पलानि १० समये चित्रानक्षत्रस्य परोन्नतांशाः ५५ तत्काले परकपाले भौमोन्नतांशाः ३० एवं चित्रानक्षत्रघंचौ लब्धोन्नतांशानामुपरि न्यस्ते त्रिंशदुन्नतांशानामुपरि सिंहलग्नस्य दशमोंऽशो लग्नः । अतो ज्ञातं भौमः सिंहराशेर्दशमे भागे सायनो वर्तते ४।१०।० । अयनांशविहीनः ३।२६।० कर्कटे भवति । एवं सर्वेऽपि ग्रहाः समानीयंते ॥

अथ ग्रहभुक्त्यानयनम्—

**प्रसाध्यते कालयुगे मते चेत्स्पष्टो ग्रहस्तर्हि तदंतरं यत् ॥**
**पड्निहतं तद्युदलोद्धृताप्तं दिक्संगुणं तस्य गतिः कलाद्या ॥२७॥**

व्याख्या ॥ मते अभीष्टे कालयुगे पूर्वप्रहरांते चतुर्थप्रहरादौ च यदि ग्रहस्पष्टतानीयते, तदा तदंतरं यदस्ति, तत् षड्भिर्हत्वा द्युदलेनोद्धृत्य तत्राप्तं दशगुणं कुर्यात्, एवं कृते सति तस्य ग्रहस्य कलाद्या गतिः स्यात् ॥

अत्रोदाहरणम्- संवत् १९३५ ज्येष्ठसुदि १५ गुरौ प्राच्योन्नतांशाः रवेः ७२ । दिनगतघटी ८ पल २६ समये स्फुटोऽर्कः सायनः २।०।३१।५१ तृतीयप्रहरांते दिनगतघटी २५ पल १८ समये स्फुटोऽर्कः सायनः २।०।४६।९। इष्टकालार्कयोरंतरं ०।०।१४।१८ रसगुणिते जातं ८५।४८ दिनार्धेन १६।५२ भक्तं लब्धं कलादिफलं ५।५१ दशगुणं कुर्यात् । एवं कृते जाता रवेः स्फुटा गतिकला ५८।२० एवं सर्वत्रानेतव्यम् ॥

अथ इष्टांशे परमचरदलानयनम्—

**निरक्षभूजेऽथ कुजेऽर्कभागं**
**दत्त्वा मृगे चिह्नमिह द्वयं स्यात् ॥**
**चरं हि तन्मध्यगतं च सौम्यं**
**याम्यं भवेन्मेषतुलादितः स्यात् ॥ २८ ॥**

निरक्षभूजात्पुरतोऽथ साक्षभूजांतमध्यस्थगतं चरार्धम् ॥
मार्गं स्पृशेद्यत्र च कालवृत्ते ते स्युर्लवाः षड्हृताश्च नाड्यः ॥२९॥
यथा यथा साक्षकुजं निरक्षात्पुरो व्रजेत्तत्र चरार्धवृद्धिः ॥
एवं कुजं याम्यदिशोऽतगं स्यान्मृगादितस्तत्र परं चरार्धम् ॥३०॥
चरे परे पंचदशात्र नाड्यश्चैकं दिनं षष्टिघटीप्रमाणम् ॥
निशापि तावत्प्रमितैव भूयः सौम्यं त्वजादेर्वणिजाद्य याम्यम् ३१

एषा व्याख्या सुगमा ॥

अथ दिनरात्रिमानानयनम्—

सूर्यांशकं प्राक्क्षितिजेऽपरे च मुक्त्वा ततो मार्गमुखे कृते द्विः ॥
आद्यंतचिह्नांतगतं दिनं स्याच्छेषास्तमिस्रा घटिकाः समस्ताः ३२

व्याख्या ॥ सूर्यांशं प्राक्क्षितिजेऽपरे क्षितिजे च मुक्त्वा ततो मार्गमुखे स्थानद्वयं प्रापिते चिह्नद्वये च विहिते पूर्वापरचिह्नांतर्गतं कालवृत्ते दिनप्रमाणं घटिकात्मकं भवति । तथैवाधःस्थितं शेषं रात्रिमानस्य घटिकादिकं स्यात् ॥

अथायनांशानयनम्—

यंत्रेंद्रमध्योन्नतभागकेभ्यो देशे निजे योऽस्ति परिस्फुटोऽर्कः ॥
सिद्धांतयुक्त्यापि च साधितो यस्तद्द्विप्रयोगादयनांशकाः स्युः ३३

व्याख्या ॥ इष्टदिने यंत्रेण मध्याह्नोन्नतांशेभ्योऽर्के स्फुटीकृते सिद्धांतयुक्त्यापि स्फुटीकृते उभयोर्यदंतरं भागाद्यं तदेव तत्र देशे अयनांशका भवंति ॥

अथ ग्रहयुत्यानयनम्—

शीघ्रस्य मंदस्य च खेचरस्य लब्धोन्नतांशांतरमेकगत्योः ॥
गत्यंतरेणापहरेत्तयोश्च विभिन्नगत्योर्गतियोगकेन ॥ ३४ ॥
लब्धं फलं वासरनाडिकाद्यं मंदाद्गतं स्यादधिकांशकस्य ।
शीघ्रस्य हीनांशयुतश्च गम्यं युतिक्षणः स्यादनयोः स एव ॥३५॥

अनयोर्व्याख्या ॥ शीघ्रग्रहस्य मंदग्रहस्य चोन्नतांशान् गृहीत्वांतरं विधाय एकगत्योर्यद्यावक्रयोर्गत्यंतरेण तदंतरं विभजेत् । भिन्नगत्योश्च गतियोगेन हरेत् ॥ इत्थं लब्धं फलं दिनाद्यं भवति । इदमेव मंदग्रहाच्छीघ्रग्रहेऽधिकांशके सति गतं, शीघ्रग्रहे हीनांशके सति गम्यं च फलं वेदितव्यम् । अनयोर्मंदशीघ्रयोर्युतिकालः स एव ॥

अत्रोदाहरणम्–संवत् १९३७ पौषसुदि १५ भौमे सायनः स्फुटो गुरुः ७।२०

५४।५४ भुक्तिः १।११ शुक्रः ७।१७।० भुक्तिः ६५।० एतस्मिन् दिने रात्रिशेषे घट्यः ३ पलानि ३० समये शुक्रशीघ्रमहत्त्वोन्नतांशाः प्राच्याः २५ एतस्मिन्काले मंदो जीवस्तदुन्नतांशाः प्राच्याः २२ उभयोरंतरं ३ सवर्ण्य १८० द्वयोर्मार्गगत्यंतरेण ५४ भागे लब्धो दिनादिकालः ३।२० अत्र मंदाच्छीघ्रस्य हीनांशकत्वादेष्यकालः । एतावता तृतीयदिवसे शुक्रवासरे दिनगतघट्यः २० पलं ० समये शुक्रगुर्वोर्युतिकालः ॥

अथ वर्तमानवर्षलग्नादागामिवर्षलग्नानयनम्—

पूर्वे कुजेऽभीप्सितवर्षलग्नं
निवेश्य मार्गाननमंकयित्वा ॥
तत्तोऽशकेऽग्र्यंक ९३ मिते धृतेऽस्मिन्
भाव्यब्दलग्नं स्फुटमैंद्रभूजे ॥ ३६ ॥

व्याख्या ॥ पूर्वे कुजेऽभीप्सितवर्षलग्नं निवेश्य मार्गाननमंकयित्वा मृगमुखं चिह्नयित्वा अग्र्यंकमिते त्रिनवति ९३ प्रमितेऽशके अस्मिन् मकरानने धृते सति भावि वर्षलग्नमैंद्रभुजे स्फुटं भवति ॥

अत्रोदाहरणम्-संवत्१८३४ सायनमेषसंक्रांतिदिने मध्याह्ने सायनोऽर्कः ११। २९।४७ एवमुदयात् घट्यः २७ पलेषु ३० संक्रमणकालस्तदा यत्सायनं लग्नं तद्वर्षं लग्नं समुच्यते ५।२१।२१।१९ अस्मादागामिवर्षे १८३५ सायनमेषसंक्रांतिदिने सायनलग्नमानीमहे । लग्नांशे ५।२१ प्राक्कुजे निहिते मकराननेऽहर्गण्यभिकशात १६८ कोष्टकांते लग्ने चिह्ने च कृते तद्ग्रे वह्निनंद ९३ प्रमितेष्वंशकेषु गुणितेषु २६१ प्रमितानामुपरि मकरमुखे समानीते प्राक्कुजेऽभीष्टवर्षस्य सायनं धनुर्लग्नमुपस्थितम् ॥ ८।१०।५५।५२ तदागामिवर्षलग्नं ज्ञेयम् । एवं सर्वाण्यपि समानेयानि ॥

अथ देशांतरसंस्कारेण स्फुटलग्नानयनम्—

मध्यस्थरेखात् ऋणं धनं स्यात्पलादिपूर्वापरदिग्विभागे ॥
तत्र स्थिते प्रागपरे च भागे कुर्वीत चिह्नं मकराननाग्रे ॥ ३७ ॥
पश्चात्पुरस्थास्य ऋणे धने च तदंशमानेन धृते मृगास्ये ॥
प्राग्भूजभागे स्वपुरे विलग्नं तदा हि देशांतरसंस्कृतं स्यात् ॥३८॥

"युग्मम्"

अनयोर्व्याख्या ॥ स्पष्टीकरणोक्तविधिना मध्यरेखादीनां प्रदेशानां देशांतरे पलाप-

१ "ततः स्थिते प्राक्क्षितिजे समांगे" इ. पाठः ।

कमुक्तं तल्लंकातो मेरुपर्यंतं, मध्यरेखातोऽभीष्टस्थानस्य प्रागपरदेशेन ऋणं धनं भवति। अत्र यद्वदेशांतरं पलात्मकमागतं वल्लभस्यापि तदेव ज्ञेयम्। ततः प्राक्कुजे भभागे लग्नांशे स्थिते सति मकरमुखं चिह्नीयम्। ततो यदि देशांतरमृणगतं भवति तदा रविदेशांतरमानेन पश्चाच्चिह्नं कार्यम्। धनगतं चेत्पुरस्ताच्चिह्नं कार्यम्। एवमुभयोर्मध्ये एकत्र मृगानने कृते सति प्राक्कुजे देशांतरसंस्कृतमिष्टपुरस्य लग्नं भवति ॥

अथ नक्षत्राणां सौम्ययाम्यक्रांतिज्ञानम्—

मध्याह्नरेखोपरि भस्य वक्रं कुलीरमेषांतगतं यदि स्यात् ॥
सौम्या तदा क्रांतिरिदं च मेषमृगांतरस्थं यदि दक्षिणा स्यात् ३९

व्याख्या ॥ यंत्रस्य मध्याह्नरेखोपरि भचक्रं नक्षत्रचंचुं धृत्वा विलोकनीयम्। यदि तत्कर्कमेषांतरस्थं स्यात् तदा तस्य नक्षत्रस्य सौम्योत्तरा क्रांतिः। इदमेव नक्षत्रमुखं यदि मेषमकरांतरगं स्यात् तदा तस्य नक्षत्रस्य दक्षिणा क्रांतिः स्यादिति ३९

अथ यंत्रस्थिताक्षांशेभ्य इष्टाक्षांशानां लग्नानयनम्—

यंत्रस्थिताक्षांशगणादभीष्टाक्षांशैर्विलग्नस्य विधिं ब्रवीमि ॥
लग्नं च तत्रोन्नतभागकेभ्यः प्राग्वत्ततः क्रांतिरियं च गुण्या ४०
अक्षांशयोरंतरकेन भक्ता परापमेनाप्तमितं लवादि ॥
मृगाननात्प्राक्पुरतः प्रदेयं सौम्यापमे यंत्रभवाक्षभागात् ॥ ४१ ॥
न्यूनाधिकेऽभीष्टपलांशके तदिष्टाक्षजं प्राक्कुजगं विलग्नम् ॥
याम्यापमे व्यत्ययतः समस्तमिदं विचार्यं गणकोत्तमेन ॥ ४२ ॥

एषां व्याख्या ॥ त्रिभिर्विशेषकम्। यंत्रस्थिताक्षांशगणाद्यथा इष्टाक्षांशैर्लग्नमायाति तथा ब्रवीमि कथयामि। तत्र लग्नं प्राग्वदुन्नतांशेभ्यः समानीय मृगानने चिह्नं कृत्वा स्थाप्यम्। ततो लग्नात्सौम्ययाम्यक्रांत्यानयनम्। इयं क्रांतिरक्षांशयोरंतरकेन गुण्या। कोऽर्थः। यंत्रस्थिताक्षांशानां तथेष्टाक्षांशानामंतरेण हन्यात्। ततः परमापमेन परमक्रांत्या भाज्या। ततः प्राप्तमंशादिफलं मृगाननात्प्राक् पुरतश्च देयम्। कोऽर्थः। यंत्रभागानीतलग्नसमये मृगास्यं लग्नं भवति। तच्चिह्नात् पृष्ठतोऽग्रतश्च देयमित्यर्थः। सौम्यापमे सौम्यक्रांतौ यंत्राक्षांशात्न्यूनाधिके इष्टाक्षांशे मृगाननात्प्राक् पुरतश्च चिह्नं कार्यम्। एवं कृते सति प्राक्कुजे यल्लग्नमुपविशति तदिष्टाक्षांशजं लग्नं भवतीति। इदं समस्तं पूर्वोक्तं याम्यापमे विपरीतम्। कोऽर्थः। याम्यापमे यंत्राक्षांशेभ्य इष्टांशे न्यूनाधिके सति पूर्वकृतमृगास्यचिह्नात् पुरतः प्राक् प्रदेयमिति गणकोत्तमेन ज्योतिर्विदुत्तमेन विचार्यम् ॥

यंत्र० १०

अस्योदाहरणम्—

यंत्रस्थिताक्षांशाः २८।३० इष्टाक्षांशाः २४।० अत्र सूर्योन्नतांशाः ६६ प्राच्याः। एभ्यो लग्नं साधितं वृषादौ सूर्ये सति १।०।०।० कर्कलग्नं च ३।०।२ प्राक्कुजे निविष्टमकरमुखे चिह्नं कार्यम्। अस्याक्रांतिस्तत्र १२।१५।५४ अंशात्मिका २०। १५।५४ एषा यंत्राक्षेष्टाक्षांशयोर्वियोगेन ४।३० हता जाता ९१।११ पराप्तमेन २३।२५ भक्ता लब्धमंशादिफलं ३।३८।३९ यत्र प्राग्लग्नानयनसमये मकराननमुप-विष्टमस्ति तस्माच्चिह्नादिदं फलं यंत्रस्थिताक्षात् २८।३९ इष्टाक्षे न्यूने २४।० प्राक् पूर्वलक्ष्चिह्ने मकरमुखे धृते प्राक्कुजे कर्कलग्नं सायनं ३।८।०।० एवमन्यत्रापि समा-नेयम्॥

अथ सदोदितनक्षत्रेभ्योऽभीष्टदेशस्याक्षांशानयनम्—

सदोदितर्क्षं तलगोर्ध्वगं सद्विध्वा द्विवाराप्ततदुन्नतांशान्॥
ज्ञात्वाथ संयोज्य च तैः पलांशा अर्धीकृतैरिष्टपुरे भवंति॥४३॥

व्याख्या। इष्टपुरे अक्षांशा भवंति। कया रीत्या। सदोदितर्क्षं तलगोर्ध्वगं च यथा भवति। कोऽर्थः। यदा ध्रुवमंडलं भ्रममाणमधः समायाति तदा सदोदितनक्षत्रं परमोन्नतांशज्ञानार्थं मुहुर्मुहुर्विध्वा पुनस्तदेव ध्रुवमंडलं भ्रममाणं यदा ऊर्ध्वं गच्छति तदा पुनरपि परमोन्नतांशज्ञानार्थं मुहुस्तदेव सदोदितं विध्वा पुनस्तदेव सदोदितर्क्षं विध्वा स्थानद्वयाप्तानुन्नतांशानेकीकृत्यार्धीकरणे इष्टदेशाक्षांशा भवंति। विशेष-श्चायम्। अक्षांशज्ञानं ध्रुवात् ध्रुवस्थानं तु केंद्रभूतमतिसूक्ष्मत्वेन दुर्लक्ष्यमतस्तत्स्था-नज्ञानार्थं सदोदितनक्षत्रवारैकैककल्पनया यात्रद्वयबोधनाच्च केंद्राभिधमक्षज्ञानमा-नीतमिति तात्पर्यार्थः॥

उदाहरणम्—इष्टस्थाने ध्रुवमंडले ऊर्ध्वगे यंत्रेण सदोदितनक्षत्रवेधनात्प्राप्ता उन्नतांशाः ३१ तथैव तस्मिन्नेवाधोगते पुनरपि सदोदितर्क्षवेधनात्प्राप्ता उन्नतांशाः २५ उभयोर्योगे ५६ अर्धीकृते २८ अतो ज्ञातं योगिनीपुरे अक्षांशाः २८ विद्यंते। एवं सर्वत्र ज्ञेयम्॥

अथ दृक्कर्मसंस्कृतनक्षत्रानयनम्—

मध्याह्नरेखोपरि भास्यभागे न्यस्तेऽत्र योऽंशोऽस्ति भमंडलस्य॥
सुसंस्कृतं तत्र हि राशिभागे स्फुटं भवेत्सायनकं तदृक्षम्॥४४॥
भूजद्वयस्योपरि भास्यदेशे धृते भवेद्यः खलु राशिभागः॥
तदृक्षसंबंधवशेन तस्य स्यातां क्रमेणाभ्युदयास्तलग्ने॥४५॥

अनयोर्व्याख्या॥ यंत्रे मध्याह्नरेखायां भास्यभागे नक्षत्रचक्रप्रदेशे धृते सति

भमंडलस्य योंऽशोऽस्ति तत्र राशिभागे तदृक्षं नक्षत्रं सुसंस्कृतं सायनं दृक्कर्मशुद्धं भवति । तथैव तस्मिन् नक्षत्रचक्रे पूर्वापररेखोपरि धृते सत्युभयत्रापि यो राशिभागो लगति तदृक्षसंबंधवशेन भस्य नक्षत्रस्योदयास्तलग्ने क्रमेण स्याताम् ॥

अथ यंत्रेण तिथिनक्षत्रयोगानयनम्—

कुजे निरक्षे रविचंद्रभागाग्न्यस्येन्मृगास्यद्वितयस्य चिह्ने ॥
कृते द्युमध्यात्परतोऽरुणोने चंद्रेऽर्क १२ भक्ते तिथयो विलब्धाः॥४६
द्युमध्यरेखांकशशांकचिह्नांतरे त्रिनिघ्ने खचतुर्विभक्ते ॥
यदाप्यते तद्भगणो मृगाग्रात्फलं गतं स्यात्किल कालवृत्ते ॥ ४७ ॥
रव्यंकपीयूषकरांकयोगे रामाहते खाब्धिभिरुद्धृते च ॥
आशाद्गतं स्यात्किल योगवृंदे शोध्यं भचक्राभ्यधिके [illegible] चक्रम्॥४८
गतं विशुद्धं निजभागहारादेष्यं भवेत्तन्निहतं च षष्ट्या ॥
चंद्रार्कभुक्त्यंतरभक्तमेव लब्धं दिनाद्यं सकलं तिथेस्तु ॥ ४९ ॥
एष्यत्यतीतेऽथ भजे खषड्भि ६० र्हते त्रिनिघ्नेंदुविभुक्तिभक्ते ॥
दिनादिकं स्यात्किल योगजे च षष्ट्या हते सूर्यशशांकभुक्तेः ५०
योगेन रामापहतेन भक्ते लब्धं दिनाद्यं फलमेवमेव ॥
ग्रहे भवेदौदयिकेऽर्धरात्रे भवेच्च मिश्रेण सुसंस्कृतं तत् ॥ ५१ ॥

एषां व्याख्या ॥ निरक्षे कुजे भागपररेखायां स्पष्टरव्यंशं चंद्रांशं च कालवृत्ते निधेयं स्यानद्वयाग्रे मृगास्ये चिह्नं कार्यम् । गणना [illegible] द्युमध्यात् मध्याह्नरेखायाः परतः पद्द्वादशादिक्रमेण कार्या ॥ "चंद्रेऽरुणोने" कोऽर्थः सूर्यांशे निरक्षभूजोपरि धृते सति मकराननं यत्र लगति तदंकप्रमिताः सूर्यांशाः कथ्यंते ॥ एवं चंद्रांशे निरक्षभूजस्थे यत्र मृगास्यं स्यात् ते चंद्रांशाश्चंद्रांशकेभ्यो रव्यंशकाः पात्यंते यदि न पतंति तदा खषड्ग्निशत् ३६० संयोज्य पात्यंते द्वादशभिर्भज्यंते लब्धाः शुक्लप्रतिपदादितिथयो भवंति । " अथ नक्षत्रानयनम् " । " द्युमध्यरेखांकशशांकचिह्नांतरे " कोऽर्थः । कालवृत्ते मध्याह्नरेखातो यत्र मृगाननं लग्नं तावंतश्चंद्रांशा लब्धाः संति, तेषु त्रिघ्नेषु चत्वारिंशता ४० भक्तेषु यत्फलमाप्यते तदेवाश्विन्यादिगतऋक्षाणि भवंति ॥

---

१ " त्रिधेरय मार्गद्वितयस्य चिह्ने " इति पाठांतरम् । २ " तद्भगणोऽश्विभिग्यास्फलं " इति पाठांतरम् ।

" अथ योगानयनम् " कालवृत्ते मकराननाग्रास्सूर्यांकचंद्रांकयोर्योगे साधिते, त्रिहृते चत्वारिंशद्विभक्ते, यल्लब्धं तदेव योगवृंदे विष्कुंभादयो योगा गता भवंति। यदि योगे कृते सति भचक्रात्म्यधिकं भवति षष्ठ्यधिकशतत्रयाधिकं जायते, तदा चक्रमप्यवशोध्यम् षष्ठ्यधिकत्रिशती पातयेत्यर्थः ॥

" अथ तिथ्यादिघटिकानयनम् " " गतं वियुक्तं निजभागहारात् " कोऽर्थः। तिथिनक्षत्रयोगादीनामानयनसमये तिथ्यादिषु लब्धेषु यच्छेषं तत्क्रमेण तेषां गत-मभिधीयते । तन्निजनिजभागहाराद्विशोधितं आगामितिथ्यादीनां क्रमात् गम्यं भवति तद्गतं गम्यं च षष्ट्याहतं रविचंद्रभुक्त्यंतरेण भज्यते एतस्मिन् लब्धं तिथे-र्दिनाद्यं दिनघटीपलात्मकं भवतीति तिथयः ॥ " अथ नक्षत्रम् " । एव्यति गम्ये अतीते गते भजे नक्षत्रजे लिप्ताभिः षष्ट्या ६० गुणिते त्रिराशितया चंद्रभुक्त्या भक्ते सति लब्धं नक्षत्रदिनादिकं भवति ॥

" अथ योगः " योगस्य गते गम्ये च षष्ट्याहते सूर्येंदुगतिगतियोगेन समा-पहृतेन भक्ते लब्धं दिनाद्यं योगस्य भवति । एतद्दिनाद्यं फलमौदयिके ग्रहे एव-मेवार्धरात्रिके तु ग्रहे मिश्रेण संस्कृतं कार्यम्। " गतं विशोधयेन्मिश्राद्गम्यं मिश्रे नियोजयेत् " दिनादिना संस्कृतं कार्यमित्यर्थः ॥

" अथ तिथ्यानयने उदाहरणम् " ॥ सं. १९३३ वर्षे चैत्रवदि ३० भौमे यंत्रेण स्फुटौ रविचंद्रौ अर्धरात्रसमये साधितौ । तत्र निरयणोऽर्कः ११।१४।४३ भुक्तिः ५९।२१ चंद्रः ११।२०।२६ भुक्तिः ८३।१६ रव्यंशे निरक्षभूजोपरि एते सति मक-राननं कालवृत्ते मध्यरेखातः षष्ट्या चतुश्चत्वारिंशदधिकशतत्रयांशेषु ३४४।४३ लग्नं। एवं चंद्रांशे निरक्षभूजे न्यस्ते मकरमुखं कालवृत्ते पंचाशदधिकशतत्रयांशेषु ३५०।२६ लग्नं । एवं रव्यंशाः ३४४।४३ चंद्रांशेभ्यः ३५०।२६ पातिता जातं अंतरं ५।४३ एतद्द्वादशभिः १२ भक्तं लब्धं तिथिस्थाने शून्यं एतावताऽमावास्या तिथिः । शेषं ५।४३ " अत्र गतेन प्रयोजनं " गतं षष्ट्या ६० संगुण्य जातं ३४३ रविचंद्रभु-क्त्यंतरेण ७७।४५ भक्तं लब्धं दिनादिफलं ०।२६।४० । एतद्गतदिनघटात्मकं-मनिमिषात् ४४।५८ विशोध्यते जातं चैत्र्यमावास्याप्रमाणं घट्यादि १८।३८ एवं सर्वत्राप्यानेतव्यम् ॥

" अथ नक्षत्रानयनोदाहरणम् " । तिथ्यानयने पूर्वं ये चंद्रांशाः ३५०।२६ आनीताः संति ते त्रिगुणा जाताः १०५१।१८ एते चत्वारिंशता ४० भक्ता लब्ध-मश्विन्यादिगतनक्षत्राणि २६ शेषं अंशस्य गतं ११।१८ एतत्सवर्णितं जातं ६७८ एतत्त्रिगुणेंदुभुक्त्या २४९३ विभज्य लब्धं दिनाद्यं फलं ०।१६।१९ एतद्गतघटात्म-दिनमिषाद् ४४।५८ विशोध्य जातं चैत्रामावास्यायां उत्तराभाद्रपदनक्षत्रं घटी २८ पलानि ३९ प्रमाणं प्राप्तं एवं सर्वत्रापि ॥

अथ योगानयनोदाहरणम्-पूर्वानीतरव्यंशाः ३४४।४३ चंद्रांशाः ३५०।२६ उभयोर्योगः ६९५।९ अत्र चक्राधिकत्वात् चक्रांशानपास्य शेषांशाः ३३५।९ एते त्रिगुणिता जाताः १००५।२७ चत्वारिंशता भक्ताः प्राप्ता विष्कुंभादयो गतयोगाः २५ अस्य गतं ५।२७ एतत्सवर्णितं जातं ३२७ एतत्त्रिगुणेंद्वर्कभुक्तियोगेन २६७१ विभज्यते लब्धं दिनाद्यं ०।१७।२० एतद्गतवशात्तद्दिनमिश्रात् ४४।५८ अपास्य जातं चैत्रामावास्यायां ब्रह्मा नाम योगो घ. ३७।३८ एवं सर्वत्र ॥

अथ तद्दिने सूर्यसिद्धांते चैत्यमावास्या घटी १७ पलानि ३५ उत्तराभाद्रपदनक्षत्रं घ. २७।३७ ब्रह्मा घ. ३६।४० प्रमाणं वर्तते, तिथ्यंतरं पलानि ५३ ''नक्षत्रांतरं पलानि ५८'' प्रमाणमस्ति, परं मंथांतरत्वान्न दोषः ॥ एवं सर्वत्रापि ज्ञेयम् ॥

अथ द्वादशांगुलशंकुतः सप्तांगुलशंकुच्छायानयनं वसंततिलकेन—

शंकुप्रभा मुनि ७ हता रविभि १२ र्विभक्ता-
प्राप्तं यदत्र सकलं फलमंगुलाद्यम् ॥
द्विःस्थं च तद्भवति सप्त ७ मितस्य शंको-
श्छायाफलं स्फुटतरं गणकैर्निबद्धम् ॥ ५२ ॥

व्याख्या ॥ द्वादशांगुलशंकोश्छाया फलज्याकोष्टकात् या प्राप्ता ११४।१० सा सप्तभिर्गुण्या जाता ७९९।१० द्वादशभिर्विभज्यते च ततः प्राप्तमंगुलादिफलं सप्तांगुलशंकोश्छाया भवति ॥

उदाहरणम् । द्वादशांगुलशंकोश्छाया फलज्याकोष्टकात्प्राप्ता सा ११४।१० सप्तभिर्गुणिते जाता ७९९।१० द्वादशभिर्विभक्ते लब्धमंगुलाद्या सप्तांगुलशंकोश्छाया ६६।३६ एवं सर्वत्रापि ज्ञेयम् ॥

वर्तते ततोऽत्र षण्णामंगुलानामुपरि प्राप्ता उन्नतांशाः ६२ एषून्नतांशेषु भुजाग्रमारोप्य पूर्वस्थानादग्रतः पश्चाद्वा तथाकृष्यते यथा भूयोऽप्युच्चस्थानस्य शिरो नक्षत्रवद्विध्यते पुनः स्वपादाग्रे चिह्निते पूर्वापरचिह्नयोरंतरं प्राप्तं "गजः" ६ एतस्मिन् द्वादशभिः १२ हते ७२ स्ववपुर्मानं गज ३ युक्तं संजाता ७५ एतदीहितस्थानस्याप्रोच्चतामानमागतम्। एवं सर्वत्र करणीयम् ॥

अथ यंत्रेण भौमादिपंचकस्योदयज्ञानमाह—

सौरं लवं प्राक् क्षितिजे निधाय चिह्नं मृगाग्रादथ कालवृत्ते ॥
कुर्यादभीष्टस्य खगस्य कालांशकेषु वामं मकराननं च ॥ ५८ ॥
कृत्वांऽकयेत्पूर्वकुजे भवेद्यत्तल्लग्नमक्षोदयगं ग्रहस्य ॥
ग्रहेऽथ चक्रे विभजेद्गखेटांतरं खगोष्णांशुविभुक्तियुत्त्या ॥ ५९ ॥
मार्गस्थिते तीक्ष्णगभस्तिखेटभुक्त्यंतरेणाप्तमिदं च कुर्यात् ॥
लब्धो दिनादिस्तु फलं ग्रहस्य कालः स च स्यादुदयाभिधानः ६०

व्याख्या ॥ त्रिभिर्विशेषकं । सौरं लवं सूर्यांशं प्राक् क्षितिजे उदयरेखायां निधाय कालवृत्ते यत्र मृगाग्रं लग्नं भवति तत्र चिह्नं कुर्यात्। तदनु तस्माच्चिह्नादभीष्टग्रहस्य कालांशेषु वामं अप्रदक्षिणं चिह्नं कृत्वा मकराननं स्थापयेत्। एवं कृते प्राक् कुजगलग्नं सायनांशं लगति। तल्लग्नं तस्य ग्रहस्याक्षोदयगं सायनांशं भवति। तत्र कालांशज्ञानमिदं। शुक्रगुरुबुधार्किकुजाः कालांशैर्ध्रुवोत्तरोत्तरैर्नवभिः शु. ९ गु. ११ बु. १३ श. १५ मं. १७ एते उदयकालांशा ज्ञेयाः ॥

"अथ गतगम्यघटीपलानयनम्" ॥ ततो लग्नग्रहयोरंतरं वक्रायक्रस्थिते ग्रहे खेटरविभुक्तियोगेनांतरेण वा विभज्यते। तत्र लब्धोऽभीष्टग्रहस्योदयो गम्यमानो दिनादिकालः स्यात्। लग्नादूने ग्रहे गतकालः। अधिके पुष्यकाल इति भावार्थः। इदमग्रे वक्ष्यते ॥

अत्रोदाहरणम्—सं. १९३४ वर्षे आश्विन सुदि १५ गुरौ अर्धरात्रसमये सायनौ रविशुक्रौ साधितौ। रविः ६।२।२९।१० । भुक्तिः५९।२८ शुक्रः ५।१८।३२।० । भुक्तिर्वक्रिता २४।४२ रव्यंशे प्राक् क्षितिजोपरिस्थिते मकराननं चतुःसप्तत्यधिकशते १७४ लग्नं तत्र चिह्ने कृते शुक्रोदयवशान्मानमहत्त्वं मानमहत्त्वेऽष्टौ कालांशास्तान् पूर्वचिह्नात्प्राक् पृष्ठभागे गणयित्वा मकराननं स्थाप्यम्। तत्र जाताः १६६ भागा एवं कृते प्राक्कुजे कन्यालग्नं सायनं ५।२४ उपविष्टं एतत् शुक्रस्याक्षसंबंध्युदयाख्यं लग्नमुच्यते। लग्नशुक्रयोरंतरं ५।० भागादिकं च सवर्णितं ३००चक्रपरागद्रविशुक्रभुक्तियोगेन ८४ भक्तं सतो लब्धो दिनादिकालः ३।३४।१७ यदि

---

१ "स्ववपुर्मानं दशाग्रयुक्तं" इति पाठांतरम् ख. ग. पुस्तके।

वर्तते ततोऽत्र पण्णामंगुलानामुपरि प्राप्ता उन्नतांशाः ६२ एपून्नतांशेषु भुजाग्रमा-रोप्य पूर्वस्थानादग्रतः पश्चाद्वा तथाक्रम्यते यथा भूयोऽप्युन्नस्थानस्य शिरो नक्षत्र-वद्विध्यते पुनः स्वपादाग्रे चिह्निते पूर्वापरचिह्नयोरंतरं प्राप्तं "गजः" ६ एतस्मिन् द्वादशभिः १२ हते ७२ स्ववपुर्मानं गेज ३ युक्तं संजाता ७५ एतदीहितस्थानस्या-प्रोच्चतामानमागतम् । एवं सर्वत्र करणीयम् ॥

; अथ यंत्रेण भौमादिपंचकस्योदयज्ञानमाह—

सौरं लग्नं प्राक् क्षितिजे निधाय चिह्नं मृगाग्रादथ कालवृत्ते ॥
कुर्यादभीष्टस्य खगस्य कालांशकेषु वामं मकराननं च ॥ ५८ ॥
कृत्वांऽकयेत्पूर्वकुजे भवेद्यत्तल्लग्नमक्षोदयगं ग्रहस्य ॥
ग्रहेऽथ चक्रे विभजेद्रखेटांतरं खगोष्णांशुविभुक्तियुक्त्या ॥ ५९ ॥
मार्गस्थिते तीक्ष्णगभस्तिखेटभुक्त्यंतरेणाप्तमिदं च कुर्यात् ॥
लब्धो दिनादिस्तु फलं ग्रहस्य कालः स च स्यादुदयाभिधानः ६०

व्याख्या ॥ त्रिभिर्विशेषकं । सौरं लग्नं सूर्यांशं प्राक् क्षितिजे उदयरेखायां निधाय कालवृत्ते यत्र मृगाग्रं लग्नं भवति तत्र चिह्नं कुर्यात् । तदनु तस्माच्चिह्ना-दभीष्टग्रहस्य कालांशेषु वामं अपदक्षिण चिह्नं कृत्वा मकराननं स्थापयेत् । एवं कृते प्राक् कुजगलग्नं सायनांशं लगति । तल्लग्नं तस्य ग्रहस्याक्षोदयगं सायनांशं भ-वति । तत्र कालांशज्ञानमिदं । शुक्रगुरुज्ञार्किकुजाः कालांशैर्द्युत्तरोत्तरैर्नवभिः शु. ९ गु. ११ बु. १३ श. १५ मं. १७ एते उदयकालांशा ज्ञेयाः ॥

• "अथ गतगम्यघटीपलानयनम्" ॥ ततो लग्नग्रहयोरंतरं चक्रावक्रस्थिते ग्रहे खेटरविभुक्तियोगेनांतरेण वा विभज्यते । तत्र लब्धोऽभीष्टग्रहस्योदयो गम्यमानो दिनादिकालः स्यात् । लग्नादूने ग्रहे गतकालः । अधिके गम्यकाल इति भावार्थः । इदमग्रे वक्ष्यते ॥

अत्रोदाहरणम्—सं. १९३४ वर्षे आश्विन सुदि १५ गुरौ अर्धरात्रसमये सायनौ रविशुक्रौ साधितौ । रविः ६।२।२९।१० । भुक्तिः५९।२८ शुक्रः ५।१८।३२।० । भु-क्तिर्यंकिता २४।४२ रव्यंशो प्राक् क्षितिजोपरिस्थिते मकराननं चतु सप्तत्यधिकशते १७४ एभं तत्र चिह्ने कृते शुक्रोदयवशान्मानमहत्त्वं मानमहत्त्वेऽष्टौ कालांशा-स्तान् पूर्वचिह्नात्प्राक् पृष्ठभागे गणयित्वा मकराननं स्थाप्यम् । तत्र जाताः १६६ भागा एवं कृते प्राक्कुजे कन्यालग्नं सायनं ५।२४ उपविष्टं एतत् शुक्रस्याक्षसं-पंध्युदयाख्यं लग्नमुच्यते । लग्नशुक्रयोरंतरं ५।० भागादिकं च सवर्णितं ३०० वक्र-यत्नाद्रविशुक्रभुक्तियोगेन ८४ भक्तं ततो लब्धो दिनादिकालः ३।३४।१७ यदि

१ "स्ववपुर्मानं हस्तत्रययुक्तं" इति पाठांतरम् ख. ग. पुस्तके ।

